The Collection of Hindu Law Texts

No. 26

# THE DÎPAKALIKÂ

OR

## ( THE RAY OF LIGHT )

BEING A COMMENTARY

ON

## THE YÂJÑAVALKYA SMṚTI

BY

## Mahopâdhyâya ŚÛLAPÂṆI

EDITED BY

**J. R. GHARPURE,** B. A., LL. B. ( Honours-in-Law ),

*Principal Law College, Poona; Fellow of the University of Bombay; Senior Advocate, Federal Court of India.*

FIRST EDITION



1939

धर्मशास्त्रग्रन्थमाला.

ग्रन्थाङ्कः ( २६ )

श्री साहुडिया महोपाध्याय श्रीशूलपाणिविरचिता

# दीपकलिका

## याज्ञवल्क्यस्मृतेः

### टीका

जगन्नाथ रघुनाथ घारपुरे,
बी. ए., एलएल. बी.,

पुण्यपत्तनस्थव्यवहारशालाया आचार्यः, मुम्बईविश्वविद्यालयसदस्यः

भारतसङ्घन्यायसभासदस्यः

इत्यनेन संशोधिता, मुद्रापिता, प्रकाशिता च ।

---

प्रथमावृत्तिः

---

शकाद्बाः १८६० ] [ क्रिस्ताब्दाः १९३९

---

# NOTE



This the XXVI volume of the Series is now being offered to the public. The **Dîpakalikâ** is a running commentary upon the Smṛti of **Yâjñavalkya** in all the three Adhyâyâs. Its author Upâdhyâya **Śûlapâṇi** is one of the most important of the authorities on the Bengal School of Hindu Law. **Jímûtavâhana,** the Author of the Dâyabhâga, **Lakṣhmîdhara,** the Author of Kalpataru, and **Sûlapâṇi,** the Author of Dîpakalikâ are the foremost authorities in the Bengal School of Hindu Law, besides **Raghunandana.**

Like other great *savants* of the ancient lore, very little is known about this great writer. All that has survived for us is the great contribution to the Dharmas′âstra literature which this renowned author has made.

In choosing Dîpakalikâ by S′ûlapâṇi for incorporation in the combined translation of selected commentaries on the Smṛti of Yâjñavalkya the fact that the Author occupies a position of eminence among the Bengal writers has been of great consideration; for, of the two great Smṛtikâras viz. **Manu** and **Yâjñavalkya,** although Manu is more ancient and respected, still it cannot be denied that Yâjñavalkya wields paramount authority in India, even in Bengal with its variations from the general Mitâkṣharâ school, and the inclusion of this commentary enables a combined presentation of the views of the general Mitâkṣharâ school together with the Benares and the Bengal schools.

A detailed account of **Śûlapâṇi** and his works, and a discussion about his probable date is deferred to the General Introduction which will be issued after the completion of the Third Book of Yâjñavalkya viz. the Prâyas′chittâdhyâya.

In this short note, it would be sufficient to state that corresponding to the Mayûkhâs and Âdityâs of the scions of the Bhaṭṭa family, S'ûlapâṇi has written fourteen Vivekâs viz. the Smṛti, the Ekâdas'î, the Tithi, the Dattaka, the Durgotsava, the Dolayâtrâ, the Pratiṣhṭhâ, the Prâyas'chitta, the Râsayâtrâ, the Vratakâla, the S'uddhi, the S'râddha, the Saṅkrânti and the Sambandha Vivekâs. Besides these, his commentary the Dîpakalikâ on Yâjñavalkya and the Pratiṣhṭhâ Dîpakalikâ are well known. He belonged to the Sâhudîyâ family of the Gouḍa Brâhmaṇas. In his works the title of Upâdhyâya or Mahâmahopâdhyâya is invariably prefixed to his name. Taking into account the internal evidence consisting mainly of his references to other works, he must have flourished between the latter end of the 14th century and the beginning of the 15th century.

In preparing the copy of the present edition the manuscript in the collection of the India Office has been of great use. Another copy from the Mandlik Collection of the Fergusson College Poona could also he availed of for collation. The copy from the India Office, however, has been taken as the basis, as it presents very few places for variations of readings. The editor expresses his gratefulness for the two collections which have been useful to him in the work of the present edition.

BOMBAY,
30th January, 1939.

J. R. GHARPURE.

---

# प्रस्तावः



धर्मशास्त्रग्रन्थमालायाः षड्विंशोऽयं ग्रंथ इदानीं प्रकाश्यते। स च साहुडिया उपाध्याय-शूलपाणिविरचिता श्रीयाज्ञवल्क्यस्मृतिटीका **दीपकलिकेति** नामतः ख्यातः। उपाध्याय-शूलपाणेः कालः शाकचतुर्दशसंवत्सरमध्यमीय इति विद्वद्भिर्निर्णीतः। प्राच्यवंगीयसंप्रदाये उपाध्यायशूलपाणेर्महदुच्चतरं स्थानं वर्तते। तत्प्रणीताः स्मृतिविवेक-एकादशी-तिथि-दत्तक-दुर्गोत्सव-दोलयात्रा-प्रतिष्ठा-प्रायश्चित्त-रासयात्रा-व्रतकाल-शुद्धि-श्राद्ध-संक्रान्ति-संबंध-विवेक-ग्रन्थास्तथा दीपकलिका नाम्नीयं याज्ञवल्क्यस्मृतिटीका तथा प्रतिष्ठादीपकलिकेति ग्रंथाः सुविख्याता एव। उपाध्यायशूलपाणेः कालादिसमालोचनं टीकात्रयसहितांग्लभाषांतरित-याज्ञवल्क्यस्मृतेश्चरमभागे विस्तरतः क्रियते इति नात्र ग्रंथविस्तारः कृतः इति शम्।

**जगन्नाथ रघुनाथ घारपुरे.**



एतद्ग्रंथसंशोधने यानि पुस्तकानि यैश्च सुमनस्कया दत्तानि
तेषां नामादीनि संज्ञाश्च प्रकाश्यन्ते ।

ब—स्वर्गस्थविश्वनाथनारायणमंडलीकमहाभागैः इंदूरस्थसदाशिवभटजी इत्येषां संग्रहात् धोंडो शामराव गरूड इत्येतैः प्रापितं १८०१ शके लेखितं पुण्यपत्तनस्थफर्ग्यूसनकालेजपुस्तकालयान्तर्गतमंडलीकाविभागस्थितम् ।

अ—आंग्लदेशीयलंडनराजधान्यां इंडियाऑफीससंग्रहात् भाण्डारकरप्राच्यसंशोधनाधिकारिभिः प्रापितम् ।

क्ष—कलिकातानगरे सार्वभौमपुस्तकसंग्रहस्थितग्रन्थशोधितम् ।

परमुपकृतं नो यैरेतानि दत्तानि ।

जगन्नाथ रघुनाथ घारपुरे

# विषयानुक्रमणिका

## आचाराध्यायः १


| विषयः | पृ. |
|---|---|
| धर्मनिरूपणम् ... | १ |
| तस्य प्रयोजनम् ... | १ |
| धर्मदेशः ... | १ |
| धर्मशास्त्रकाराः ... | २ |
| सदाचारः ... | २ |
| धर्ममूलानि ... | २ |
| धर्मलक्षणम् ... | २ |
| पर्षल्लक्षणम् ... | ३ |
| **ब्रह्मचारिप्रकरणम् २** | |
| संस्कारः ... | ३ |
| शौचविधिः ... | ४ |
| आचमनम् । प्राणायामः | ४ |
| जपकालः ... | ४ |
| गुर्वभिवादनम् ... | ५ |
| दण्डाजिनानि ... | ५ |
| भैक्षचर्या, भोजनम् ... | ५ |
| गुरुः, आचार्यः ... | ५ |
| उपाध्यायः ... | ६ |
| ब्रह्मयज्ञाध्ययनादि ... | ६ |
| **विवाहप्रकरणम् ३** | |
| त्रयः स्नातकाः ... | ७ |
| विवाहकालः ... | ७ |
| स्त्रीलक्षणानि ... | ७ |
| सपिण्डाः ... | ७ |
| वरलक्षणानि ... | ८ |
| पुंस्त्वपरीक्षा ... | ८ |
| सवर्णासवर्णभार्यापरिग्रहे | ८ |
| शूद्रापरिणयने ... | ९ |
| अष्टौ विवाहाः ... | ९ |
| कन्याप्रदाः ... | १० |
| अदुष्टभार्यापरित्यागे दण्डः | १० |
| स्त्रैण्यादयः ... | १० |
| नियोगः ... | १० |
| व्यभिचारिणीनिषेधः | ११ |
| अधिवेदननिमित्तानि ... | ११ |
| गर्भधारणयोग्यकालः ... | ११ |
| स्त्रीसेवनकालः ... | १२ |
| स्त्र्यनुनयः कर्तव्यः ... | १२ |
| स्त्रीणामाचारः ... | १२ |
| प्रोषितभर्तृकानियमाः... | १२ |
| **वर्णजातिविवेकप्रकरणम् ४** | |
| अनेकभार्यः प्रमीतभार्यश्च | १३ |
| अनुलोमप्रतिलोमाः ... | १३ |
| संकरजाः ... | १३ |
| **गृहस्थधर्मप्रकरणम् ५** | |
| गृहस्थधर्मः ... | १४ |
| पंचमहायज्ञाः । वैश्वदेवः | १४ |
| भोज्याभोज्यानि ... | १५ |
| श्रोत्रिये विशेषः ... | १५ |
| गृहस्थस्य साधारणनियमाः | १६ |
| कुशूलकुंभीधान्यादि ... | १७ |
| **स्नातकधर्मप्रकरणम् ६** | |
| स्नातकव्रतानि ... | १७ |
| आपद्वृत्तयः ... | १७ |
| वार्धुषिकः ... | १७ |
| स्नातकस्य वस्त्रोपवस्त्रादि | १८ |
| अनध्यायाः ... | १९ |
| अभोज्यान्नाः ... | २० |
| **भक्ष्याभक्ष्यप्रकरणम् ७** | |
| पर्यायान्नम् ... | २० |
| पर्युषितादि ... | २१ |
| अभक्ष्याणि ... | २२ |
| अपवादाः ... | २२ |
| **द्रव्यशुद्धिप्रकरणम् ८** | |
| उच्छिष्टघृतादिलेपे ... | २२ |
| अल्पानां शुद्धिः ... | २२ |
| दार्वादीनां शुद्धिः ... | २३ |
| तोयादीनां शुद्धिः ... | २४ |
| **दानप्रकरणम् ९** | |
| दानाय पात्रापात्रविचारः | २४ |
| पात्रे दातव्यम् ... | २५ |
| **श्राद्धप्रकरणम् १०** | |
| श्राद्धकालाः ... | २६ |
| पञ्चाग्नयः ... | २६ |
| श्राद्धे ब्राह्मणाः ... | २७ |
| श्राद्धप्रयोगः ... | २८ |
| एकोद्दिष्टम् ... | २९ |
| श्राद्धफलानि ... | ३० |
| **गणपतिकल्पप्रकरणम् ११** | |
| **ग्रहशान्तिप्रकरणम् १२** | |
| ग्रहादीनामाकारविशेषाः | ३१ |
| पूजनादि ... | ३२ |
| **राजधर्मप्रकरणम् १३** | |
| व्यसनानि ... | ३२ |
| सचिवादीनां गुणाः ... | ३३ |
| दूतः ... | ३३ |
| राज्ञो दिनचर्या ... | ३४ |

## व्यवहाराध्यायः २


| विषयः | पृ. |
|---|---|
| **साधारणमातृका—१** | |
| व्यवहाराः ... | ३६ |
| मनूक्ताः ... | ३६ |
| भाषास्वरूपादि ... | ३७ |
| उत्तरभेदाः ... | ३७ |
| व्यवहारस्य चतुष्पात्त्वम् | ३८ |
| **असाधारणमातृका—२** | |
| लग्नकाभावे ... | ३८ |
| संप्रतिपत्तौ ... | ३८ |
| पंचविधहीनः ... | ३९ |
| आगमभुक्त्यादि | ४०, ४१ |
| मानुषी दैवी क्रिया ... | ४१ |
| **ऋणादानप्रकरणम् ३** | |
| वृद्धिभेदाः ... | ४२ |
| वृद्धेः सीमाः ... | ४३ |
| तदपवादाः ... | ४३ |
| देयर्णानि ... | ४३ |
| अदेयानि ... | ४४ |
| प्रतिभूभेदाः ... | ४५ |
| तेषामधिकारादि ... | ४५ |
| आधिभेदाः ... | ४५ |
| **उपनिधिप्रकरणम् ४** | ४६ |
| **साक्षिप्रकरणम् ५** | ४६ |
| साक्षिसंख्या ... | ४७ |
| साक्षिभेदाः ... | ४७ |
| साक्षिशपथाः ... | ४७ |
| कौटसाक्ष्ये दण्डः ... | ४८ |
| **लेख्यप्रकरणम् ६** | |
| लिखनानभिज्ञे विशेषः | ४९ |
| बलोपधिकृतलेख्यासिद्धिः | ४९ |
| अपवादः ... | ४९ |
| लेख्यस्वरूपम् ... | ४९ |
| **दिव्यप्रकरणम् ७** | |
| दिव्यानि ... | ५० |
| सर्वदिव्यकालः ... | ५० |

| विषयः | पृ. |
|---|---|
| वर्णविशेषाद्दिव्यविशेषाः | ५० |
| अपराधविशेषात् ,, ... | ५० |
| धटदिव्यम् ... | ५१ |
| अग्निदिव्यम् ... | ५१ |
| उदक ,, ... | ५१ |
| विषविधिः ... | ५२ |
| कोष ,, ... | ५२ |
| तंडुलतप्तमाषधर्माधर्मादि | ५२ |
| शपथाः ... | ५२ |
| **विभागः ८** | |
| विभागकालाः ... | ५४ |
| न्यूनाधिकविभागः ... | ५४ |
| उद्धारविभागः ... | ५४ |
| अविभाज्यम् ... | ५४ |
| विद्यालब्धम् ... | ५५ |
| अविद्यानां विशेषः ... | ५५ |
| विभागोत्तरगर्भाधाने ... | ५५ |
| पितृपत्न्यः ... | ५५ |
| पुत्राः ... | ५६ |
| पुत्रप्रकाराः ... | ५६ |
| दत्तकादयः ... | ५६ |
| अपुत्रधनाविभागः ... | ५७ |
| संसृष्टिः ... | ५८ |
| संसृष्टधनविभागः ... | ५८ |
| स्त्रीधनाधिकारिणः ... | ५९ |
| विभागधर्मसन्देहे ... | ५९ |
| **सीमाविवादप्रकरणम् ९** | |
| सीमानिर्णयः ... | ५९ |
| **स्वामिपालविवादः १०** | |
| गवादिभिः सस्यविनाशे | ६० |
| **अस्वामिविक्रयः ११** | |
| **दत्ताप्रदानिकम् १२** | |
| देयादेयानि ... | ६१ |
| दत्तादत्तानि ... | ६२ |

| विषयः | पृ. |
|---|---|
| **क्रीतानुशयः १३** | |
| अनुशयावधिः ... | ६२ |
| **अभ्युपेत्याशुश्रूषा १४** | |
| **संविद्व्यतिक्रमः १५** | |
| **वेतनादानम् १६** | |
| **द्यूतसमाह्वयौ १७** | |
| कूटाक्षदेविनः ... | ६४ |
| तेषां दंडाः ... | ६४ |
| **वाक्पारुष्यम् १८** | |
| तल्लक्षणम् ... | ६५ |
| अनुलोमप्रतिलोमाक्षेपे | ६५ |
| **दण्डपारुष्यम् १९** | |
| तल्लक्षणम् ... | ६५ |
| **साहसम् २०** | |
| तत्प्रकारः ... | ६७ |
| साहससदृशापराधाः ... | ६८ |
| **विक्रीयासंप्रदानम् २१** | |
| क्रीतानुशयः ... | ७० |
| **संभूयसमुत्थानम् २२** | ७० |
| **स्तेयम् २३** | |
| चौरान्वेषणम् ... | ७० |
| स्तेनातिदेशाः ... | ७१ |
| घातकान्वेषणम् ... | ७१ |
| **स्त्रीसंग्रहणम् २४** | |
| तद्भेदाः ... | ७२ |
| अभिगमनदंडः ... | ७२ |
| कन्यादूषणे ... | ७२ |
| अवरुद्धागमने ... | ७३ |
| **प्रकीर्णप्रकरणम् २५** | |
| प्रकीर्णानि ... | ७३ |
| निर्णीतप्रत्यावर्तयितुः ... | ७४ |
| व्यवहारदर्शने फलम् ... | ७४ |
| दंड्यानां दंडितानां च फलम् | ७४ |

# प्रायश्चित्ताध्यायः ३


| विषयः | पृ. |
|---|---|
| **आशौचप्रकरणम् १** | |
| सूक्तपाठादि ... | ७५ |
| आशौचकाले कर्मविचारः | ७६ |
| अन्तरा जन्ममरणे ... | ७७ |
| कन्यादिषु ... | ७८ |
| शुद्धिहेतवः ... | ७९ |
| **आपद्धर्मप्रकणरम् २** | |
| मुख्यासम्भवे वृत्त्यन्तराणि | ८० |
| **वानप्रस्थम् ३** ... | ८० |
| **यत्याश्रयः ४** ... | ८१ |
| प्रव्रज्याकालः ... | ८१ |
| दण्डादि ... | ८१ |
| शरीरोत्पत्तिप्रकारः | ८२, ८३ |
| ज्ञानेन्द्रियाणि, कर्मेन्द्रियाणि | ८४ |
| उपासनीयात्मस्वरूपम् | ८५, ८६, |
| सत्वादिगुणपरिपाकाः... | ८७ |

| विषयः | पृ. |
|---|---|
| आत्मना जगत्सृष्टिः ... | ८८ |
| मोक्षमार्गः ... | ८९ |
| स्वर्गमार्गः | ९०, ९१ |
| देवयानपितृयानादि ... | ९२ |
| योगविभूतयः ... | ९२ |
| **प्रायश्चित्तप्रकरणम् ५** | |
| तिर्यक्त्वादुत्तीर्णानां मानुष्ये लक्षणानि ... | ९३ |
| प्रायश्चित्ताधिकारिणः... | ९४ |
| गुरुतल्पसमानि ... | ९५ |
| उपपातकानि ... | ९६ |
| निमित्तान्तरेष्वतिदेशाः | ९७ |
| सुरापानप्रायश्चित्तानि... | ९८ |
| सुवर्णस्तेयादि ... | ९९ |
| संसर्गाः । तत्प्रकाराः ... | ९९ |
| तत्प्रायश्चित्तम् ... | १०० |
| मिथ्याभिशस्ते ... | १०० |

| विषयः | पृ. |
|---|---|
| गोवधप्रायश्चित्तम् ... | १०१ |
| स्त्रीवधे–प्राणिवधे च ... | १०२ |
| पुंश्चलादिवधे ... | १०३ |
| अवकीर्णिप्रायश्चितम्... | १०३ |
| हिंसाप्रायश्चित्तापवादाः | १०४ |
| रजस्वलागमने ... | १०४ |
| सामान्यप्रायश्चित्तानि ... | १०५ |
| व्यभिचारे ... | १०५ |
| अनुलोमप्रतिलोमतः ... | १०५ |
| ब्रह्मघ्नादिषु ... | १०५ |
| रहस्यप्रायश्चित्तानि ... | १०६ |
| रुद्रगायत्र्यादिजपः ... | १०७ |
| ब्रह्मकूर्चः ... | १०७ |
| महासांतपनः ... | १०७ |
| कृच्छ्रातिकृच्छ्रे ... | १०८ |
| सांतपनप्राजापत्ये ... | १०८ |
| चान्द्रायणानि ... | १०९ |
| प्रायश्चित्तफलम् ... | ११० |

## पाठान्तराणि

पृ. २७ पं. ३२ दत्त्वेत्यादि । 'हुतशेषं दत्त्वा पात्रमालभ्य जपति' इति गृह्यदर्शनात्
पात्राभिमंत्रितं कृत्वाऽगुष्ठं निवेशयेदिति संबंधः । सव्येत्यादि (आपो०)

पृ. ३२ पं. ४ सर्वे किरीटिनः कार्या ग्रहा लोकहितप्रदाः ।

पृ. ३२ पं. १६ चित्रान्नं नानाप्रकारमन्नं दद्यादिति सूर्योद्देशेन गुडौदनादि ब्राह्मणान्
भोजयेत् । धेनुरित्यादि । भुक्तवद्भ्यो ब्राह्मणेभ्यो दद्यात् इति ।

पृ. ३५ पं. १६ [ ३५७ श्लो. ] अधर्मदण्डनं धर्मरहितदण्डनम् ।
[ ३५८ श्लो. ] अपीत्यादि। अर्घ्यः पूज्यः। पित्रादिव्यतिरकेणेदम्।
" अदण्ड्यौ मातापितरौ। स्नातकपरिव्राड्वानप्रस्थश्रुतिशीलशौचाचार-
वन्तः । ते हि धर्माधिकारिणः " इति वचनात्।
[ ३५९ श्लो. ] यो राजा.
[ ३६० श्लो. ] इतीत्यादि। पृथग्वर्गद्वारेण। ( व्यवहारान्–)

## क्षपाठाः

पृ. ७ पं. ४ व्रतं समाप्य वेदमसमाप्य—

पृ. १० पं. १२ कन्यादोषमनभिधाय—

पृ. १३ पं. ६ जनकजातीया भवन्तीत्यर्थः ।

पृ. ४२ पं. १८ निराधाने द्विकशतं

पृ. ४६ पं. १९ स्वामिने त्वं दास्यसीति.

पृ. ५४ पं. १७ साधारणं धनमान्विच्छन्

पृ. ५६ पं. ८ उभयोः बीजिक्षेत्रिकयोः ।

पृ. ५८ पं. ८+ " अनपत्यस्य धर्मोऽयमभार्यापितृकस्य च ।

पृ. ५८ पं. ३१ ऊर्ध्वं मातुः पित्रुपरतावित्यर्थः ।

उपर्युद्धृताः पाठभेदा महत्त्वतारतम्येन प्रदर्शिताः । अन्येऽपि बहवो वर्तन्ते ।

# दीपकलिका

### शूलपाणिकृता

# याज्ञवल्क्यस्मृतिटीका

**श्रीगणेशाय नमः ॥**

अशेषकलुषध्वंसि नत्वा कृष्णपदाम्बुजम् ।
**याज्ञवल्क्यस्मृतेष्टीकां शूलपाणिः** समातनोत् ॥ १ ॥
अज्ञानतिमिरग्रस्तशास्त्रार्थप्रतिपत्तये ।
कृतेऽयं **दीपकलिका** कलिकालमलापहा ॥ २ ॥

**याज्ञवल्कीये १ श्लोकः ।**

**योगीश्वरमित्यादि** । योगिनां सनकादीनामीश्वरमाराध्यं **याज्ञवल्क्यनामानमृषिं सम्पूज्य** यथाविधि पूजयित्वा । **अब्रुवं**स्तमुक्तवन्तः । मुनिभिरपि धर्म्मसन्देहे पृच्छ्यमानस्य याज्ञवल्क्यस्योत्कर्षः सूचितः । **वर्णा** ब्राह्मणक्षत्रियविट्शूद्राः । **आश्रमा** ब्रह्मचारिगृहस्थवानप्रस्थभिक्षवः । **इतरे** सङ्करजा अनुलोमजाः प्रतिलोमजाश्च । तेषां **धर्म्मान्** वैदिकगम्यश्रेयःसाधनरूपान् **नोऽस्मभ्यं ब्रूहीत्यब्रुवन्** । प्रतिलोमजानामहिंसासत्यादिसामान्यधर्माधिकारोऽस्ति । 'प्रतिलोमजा धर्म्महीना' इति (अ. ४ सू. २०) **गोतमीयनिषेधो** विशेषधर्म्मपरः । धर्मानिति बहुत्वं नित्यनैमित्तिककाम्यपरम् । **अशेषतः** सामस्त्येन । एतेन पूजितेन धर्म्मो वक्तव्यः अभिधेयसम्बन्धप्रयोजनम् । ग्रन्थस्याधिकारिणोऽपि दर्शिताः । तत्र धर्मोऽभिधेयस्तेन सह जन्यजनकप्रतिपाद्यप्रतिपादकलक्षणः संबंधः । स्वर्गादि प्रयोजनम् । पत्न्युपगमनादिकं नियमतया धर्म्म एव । पश्चादधर्म्माभिधानं प्रायश्चित्ताभिधानार्थम् ।

ननु स्वोक्तत्वे मां सम्पूज्येति स्यात् । आचार्याणां स्वप्रणीतेऽपि तथा प्रयोगदर्शनात् । तथा कर्म्माण्याह **जैमिनिः**–(६।१।४) 'फलार्थत्वात् तत' इति । याज्ञवल्क्यशिष्येणाप्ययं कृत इति केचित् ॥ १ ॥

[ **२ श्लो.** ] उत्कृष्टदेशतो धर्म्मनिरूपणमाह । **मिथिलेत्यादि** । **ध्यात्वा** वक्तव्यजातं विचिन्त्य । **मृगः** स्वभावाच्चरति न हठादिनेति बोध्यम् । यथाह **मनुः** (अ. २ श्लो. १३)– "कृष्णसारस्तु चरति मृगो यत्र स्वभावतः । स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः"॥ इति। कृष्णमृगचरणोपलक्षितदेशस्यापि यद्धर्म्मदेशत्वकथनं तत् संपूर्णधर्म्माभिप्रायेण । यथा **मनुः** (२।२२)—

"आ समुद्रात्तु वै पूर्वादा समुद्राच्च पश्चिमात् । तयोरेवान्तरं गिर्य्योरार्यावर्त्तं विदुर्बुधाः"॥

**तयोः** पूर्वोक्तहिमवद्विन्ध्ययोः ॥ २ ॥

[ ३ श्लो. ] धर्मोपायशास्त्रमाह। **पुराणेत्यादि**। **पुराणम्** 'अष्टादशेति' **विष्णुपुराणोक्तम्** ( ३।६।१९–२३ )। **न्यायो गोतमादि**प्रणीतशास्त्रम्। **मीमांसा** द्विविधा। कर्मब्रह्मजैमिनिबादरायणभेदात्। **धर्मशास्त्रं** मन्वादिप्रणीतम्। **वेदाः** षडङ्गैः सह। **अङ्गानि** शिक्षाकल्पव्याकरणनिरुक्तछन्दोज्योतिषैः सह वर्त्तमानाः। **स्थानानी**त्यौपचारिकम्। एतानि तत्वज्ञानानामध्ययनद्वारा जनकानि **धर्मस्य**। **यद्विष्णुपुराण**वचनम् ( ३।६।२६–२७ )—

"अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः। धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश॥
"आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः। अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव ताः"॥ इति।

तत् आयुर्वेदादिचतुष्टयमुपवेदत्वेन वेदान्तर्भूतम्॥ ३॥

[४-५ श्लो.] धर्मशास्त्रवक्तॄनाह। **मन्वत्री**त्यादि। **च**शब्देन बौधायनच्यवनमरीच्यादीनां

"अष्टादशपुराणानि रामस्य चरितं तथा। विष्णुधर्म्मादिशास्त्राणि शिवधर्मांश्च भारत॥
"कार्त्स्न्यं वेदं पञ्चमं च यन्महाभारतं स्मृतम्। सौराश्च धर्मा राजेन्द्र मानवोक्ता महीपते॥
"जयेति नाम एतेषां प्रवदन्ति मनीषिणः" इत्यादीनां च परिग्रहः॥ ४-५॥

[ ६ श्लो. ] सम्पूर्णं कारणं निरूपयति। **देश** इत्यादिना। **देशे** ब्रह्मावर्त्तादौ। **काले** उपरागादौ। **उपायेने**तिकर्त्तव्यतया। **पात्रे** श्रुतशीलवति। यत् प्रकर्षेण दीयते तत्संपूर्णधर्मकारणम्। देशादिहीनस्य तामसधर्मत्वात्। प्रदर्शनार्थमिदम्। यागादिष्वपि बोध्यम्॥ ६॥

[ ७ श्लो. ] प्रमाणमाह। **श्रुतिरि**त्यादि। **विष्णुपुराणोक्त**सदाचारो यथा ( ३।११।३)—
"साधवः क्षीणदोषाः स्युः सच्छब्दः साधुवाचकः। तेषामाचरणं यत्स्यात्सदाचारः स उच्यते"॥
दोषा रागद्वेषमोहाः। **स्वस्य च** प्रीतिः प्राङ्मुखत्वोदङ्मुखत्वाद्याचमने धर्मकारणम्। **सम्यक् सङ्कल्पज** इति। शास्त्राविरुद्धसङ्कल्पजः कामस्तु दानादिर्मया कर्त्तव्य इति जनितेच्छा

तथा च "धर्माय पुनरारम्भः सङ्कल्पोऽपि न निष्फलः" इति एतस्याचारभेदत्वान्न **मनुना** पृथग्विहितम्। यथा **मनुः** ( २।६ )—

"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनस्तुष्टिरेव च"॥

शीलं चाचारभेदत्वान्न **याज्ञवल्क्येन** पृथगुक्तम्। शीलमाह **हारीतः**–"ब्रह्मण्यता देवपितृभक्तता सौम्यताऽपरोपतापिताऽनसूयता मृदुताऽपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता प्रशान्तिश्च" इति त्रयोदशविधं शीलम्। श्रुत्यादेः साक्षाद्धर्मलक्षकत्वमतो न पुराणन्यायेत्यनेन पौनरुक्त्यम्।

"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्"॥

पुराणस्य न्यायादीनां च लक्षणादिकथाप्रधानत्वपरंपराधर्मवृत्तित्वाभ्यां न साक्षाद्धर्मलक्षणत्वम्॥ ७

---

१ भविष्यपुराणोक्ताः। २ मनुस्मृ. २।१२।

[ ८ श्लो. ] " धर्मस्वरूपमाह । इज्येत्यादि । **इज्या** यज्ञः । **आचारं** आवश्यकं कर्म । **दमो** मनोनियमनम् । हिंसा वधरूपेच्छा । तदभावोऽ**हिंसा** । **स्वाध्यायकर्म** वेदाध्ययनम् । **योगेन** योगजधर्मेण **आत्मदर्शनम्** ॥ ८ ॥

[ ९ श्लो. ] अपरं धर्मलक्षणमाह । **चत्वार** इत्यादि । ऋगादिवेदज्ञा धर्म्मशास्त्रज्ञाश्च **त्रैविद्यं** ' भिक्षादिभ्योऽण्[1] ' । **मनुः** ( १२।११२ )—

" ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च । त्र्यवरा परिषद् ज्ञेया धर्मसंशयनिर्णये " ॥ **अध्यात्मवित्तमः** कृतात्मसाक्षात्कारः ॥ ९ ॥

## अथ ब्रह्मचारिप्रकरणम् २

[ १० श्लो. ] वर्णधर्ममाह **विप्रेत्यादि** । यथा **यमः**—

" शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः । न केनचित्समुत्सृष्टः सृष्टवांस्तं प्रजापतिः" ॥

**ब्रह्मपुराणे**—" विवाहमात्रं संस्कारः शूद्रोऽपि लभते सदा " इति वचनं नेतरसंस्कारनिवर्त्तकं किंतु मंत्रसंबन्धनिषेधपरं तथैवोक्तेः ॥ १० ॥

[ ११।१२।१३ श्लो. ] **गर्भाधानेत्यादि** । **ऋतौ** ऋतुकाले । 'चतुर्थे स्पन्दते गर्भम्' इति **वचनात्** तृतीये मासि पुंसवनमित्यर्थः । **वेतिपदमिच्छाविकल्पपरम्** । गर्भाधानादि प्रतिगर्भं न कार्यम् । **हारीतः**—

"सकृत्तु कृतसंस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं समादत्ते स गर्भः संस्कृतो भवेत्"॥ इति । **चतुर्थे मासि निष्क्रम** इति छन्दोगव्यतिरिक्तविषयम् । **यथाकुलं** कुलमनतिक्रम्य प्रथमे द्वितीये वा कार्यम् । तृतीयाब्द एव औत्सर्गिकश्चूडाकरणकालः । कुलाचारनियमस्तु तस्यापवादः । क्रियया शुचिशुद्धत्वं यातीत्यर्थः । **तूष्णीं** मौनम् ॥ १३ ॥

. [ १४ श्लो. ] गर्भाष्टम इत्यादि । **गर्भाष्टमे** गर्भसहिताष्टमे । ण्यन्तप्रयोगाद्**उपनायनम्**उपनयनं अन्यद्वाराऽपि कर्त्तव्यम् । **सैक** इति द्वादशे कर्त्तव्यमित्यर्थः। तथा च **मनुः** (२।३६)—
" गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः " । यथाकुलमिति पूर्वोक्तस्यापवादः ॥ १४ ॥

[ १५ श्लो. ] उपनीयेत्यादि । अत्र प्रणवपूर्वकता ज्ञेया "ब्रह्मणः प्रणवं कुर्यादादावंते च सर्वदा" ( २।७४ ) इति **मनु**वचनात् । **एनं** शिष्यं **शौचं** वक्ष्यमाणम् । **आचारो** गुर्वभिवादनादिः ॥ १५ ॥

[ १६ श्लो. ] शौचमाह । **दिवेत्यादि** । **कर्णस्थं** यज्ञसूत्रं यस्येति सः । यत्तु **यमवचनम्**—
"प्रत्यङ्मुखस्तु पूर्वाह्णे अपराह्णे तु प्राङ्मुखः । उदङ्मुखस्तु मध्यान्हे निशायां दक्षिणामुखः" ॥ इति तदिच्छाविकल्पपरम् ॥ १६ ॥

[ १७ श्लो. ] **गृहीतशिश्न** इत्यादि । गृहीतः शिश्नो येन सः । **उत्थाय** स्थानान्तरं गत्वा । **मृद्भिर्मनूक्ताभिः** । यथा ( ५।१३५ )—

" एका लिङ्गे गुदे तिस्रस्तथा वामकरे दश । उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता ॥

---

१ व्या. सू. ४।२।३८।

"अर्द्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता । द्वितीया तु तृतीया तु तदर्द्धं परिकीर्तिता ॥
"लिङ्गे तु मृत्समाख्याता त्रिपर्वी पूर्यते यया" ॥

**उद्धृतेन तु** जलाशयस्थैः । यदा तु उक्तमृदाऽपि लेपक्षयो न स्यात्तदाऽधिकयाऽपि मृदा गन्धलेपक्षयकरं शौचं कुर्यात् । **अतन्द्रितोऽ**नलसः । **दक्षः**[1]—

"यच्चोदितं दिवाशौचमर्द्धं रात्रौ विधीयते । आतुरस्य तदर्द्धं स्यात्तदर्द्धं तु पथि स्मृतम्" ॥

[ १८ श्लो. ] अन्तर्जान्वित्यादि । **अन्तर्जानु** जानुनोर्मध्ये बाहू कृत्वा । **देवलः** "शिखां बध्वा वसित्वा" । **उपस्पृशेदा**चामेत् ॥ १८ ॥

[ १९ श्लो. ] ब्राह्मादितीर्थमाह । **कनिष्ठेत्यादि** । **देशिनी** तर्ज्जनी । विशेषमाह **हारीतः**— "अंगुष्ठदेशिनोरन्तरा पित्र्यम्।मध्यमाग्नेयम्" । मध्यं हस्तमध्यम्।प्रतिग्रहमाग्नेयेनेत्यस्य फलम् १९

[ २० श्लो. ] **त्रिः प्राश्येत्यादि** । त्रिरिति स्वार्थे "द्वित्रिचतुर्भ्यः सुच्"( व्या. सू. ५।४।१८) इति । अङ्गुष्ठमूलेन "अङ्गुष्ठमूलेन मुखं द्विरुन्मृज्य" इति **देवल**वचनात् । **खानि** इन्द्रियाणि शिरःस्थानि । "खानि चोपस्पृशेच्छीर्षण्यानि" ( १।२८ ) इति **गोतम**वचनात् । 'त्रिश्चतुर्वा अप आचामेत्" इति ( १।२५ ) **गोतम**वचनं भावशुध्द्यपेक्षया विकल्पपरम्। अङ्गुलीविन्यासस्य क्रममाह—

"प्रक्षाल्य पाणी पादौ च त्रिः पिबेदम्बु वीक्षितम् । संवृत्यांगुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम् ॥
"संहत्य तिसृभिः पूर्वमास्यमेवमुपस्पृशेत् । अंगुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ॥
"अंगुष्ठानामिकाभ्यां च चक्षुः श्रोत्रे पुनः पुनः । नाभिं कनिष्ठांगुष्ठाभ्यां हृदयं तु तलेन वै ॥
सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत्"॥इति।**प्रकृतिस्थाभि**रात्मीयरूपरसयुक्ताभिः॥२०॥

[ २१ श्लो. ] हृत्कण्ठेत्यादि । **आभिरद्भिः** । **अन्तत** ओष्ठसमीपत इत्यर्थः ॥ २१ ॥

[ २२ श्लो. ] **स्नानमित्यादि** । **अब्दैवतैः** "आपोहिष्ठादि"मंत्रैः । **मार्जनं** कुशैः **संयमो** वक्ष्यमाणमन्त्रैः ॥ २२ ॥

[ २३ श्लो. ] **गायत्रीमित्यादि** । 'आपोज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोम्' इति **तैत्तिरीयं प्रसिद्धं शिरः** । **प्रणवसंयुक्तामिति** प्रतीकमध्याहृत्य । तेन प्रत्यवयवं प्रणवसंयुक्तामित्यर्थः । शिरसोऽन्ते चेति **सं**शब्दार्थः । **छन्दोगपरिशिष्टे कात्यायनः**—

"भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः । महर्जनस्तपः सत्यं गायत्री च शिरस्तथा" ॥ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरिति शिरः । प्रतिप्रतीकं प्रणवमुच्चारयेत् । तथेति दश'प्राणायामः स उच्यते' ॥ २३ ॥

[ २४–२५ श्लो. ] **प्रत्यक्** प्रत्यङ्मुखः । तारकोदयपर्यन्तम् । **सन्ध्यामित्यादि** । **प्राक्** प्राङ्मुखः सूर्यदर्शनपर्यन्तं उर्ध्वः सन् **तिष्ठेत्**सावित्रीं जपन् । मध्यसन्ध्यायां तथा । यथा **छन्दोगपरिशिष्टे**—'तिष्ठेदोदयनात्पूर्वां मध्यमामपि शक्तितः' । आसीतोडुजपन् । जपकालमाह **संवर्त्तः**—

"प्रातःसन्ध्यां सनक्षत्रामुपासीत यथाविधि । सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभास्कराम्"॥ ( २४–२५ )

---

१ दक्षः ।

[ **२६–२७ श्लो.** ] **ततोऽभिवादयेदि**त्यादि । होमानन्तरं विद्याद्यधिकान् " सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः" इति (२।७२) **मनु**स्मरणात् । अभिवादयेऽमुकशर्माहमस्मि भो । **मनुः** ( २।१२२, १२४ )–
" अभिवादात्परं विप्रो ज्यायांसमभिवादयेत् । असौ नामाऽहमस्मीति स्वनाम परिकीर्त्तयेत् ॥
" भोः शब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादयन् " ॥ इति । प्रत्यभिवादनमाह **मनुः** (२।१२५)–
"आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने । अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरप्लुतः "॥
अकार इति आकारादिवर्णोपलक्षणम् । नाम्नामकारांतत्वनियमाभावात् । पूर्वमक्षरं संयुक्तं यस्मात् स पूर्वाक्षरो नामावच्छिन्नो नामगण इत्यर्थः । पूर्वाक्षरश्चासौ प्लुतश्चेति । **अस्मै गुरवे** अस्य गुरोः ॥ २६–२७ ॥

[ **२८ श्लो.** ] कृतज्ञेत्यादि । **कृतज्ञ** उपकारस्मरणशीलः । **अद्रोही** द्रोहाभाववान् ॥ २८ ॥

[ **२९–३० श्लो.** ] दण्डाजिनेत्यादि । विशेषमाह **मनुः** (२।४५, ४१ )–
" ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ । पैलवोदुंबरौ वैश्यो दण्डानर्हति धर्मतः ॥ ४५ ॥
" कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः । वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च" ॥४१॥
कार्ष्णं कृष्णमृगचर्म । रुरुर्बहुशृङ्गो मृगः । बस्तच्छागः । तथा ( २।४४ )–
" कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् । शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रकम् " ॥
त्रिवृत् नवतन्तवः । **देवलः**–" यज्ञोपवीतं कुर्वीत सूत्राणि नवतन्तवः " ।
**ब्राह्मणेष्वित्यादि** । **अनिन्द्येषु** अपतितेषु । **आत्मवृत्तये** प्राणधारणाय । **आदिमध्येत्यादि** । भवन् भिक्षां देहि । भिक्षां भवन् देहि । भिक्षां देहि भवन् । इति प्रयोगः ॥ २९–३० ॥

[ **३१ श्लो.** ] **कृताग्नी**त्यादि । **आपोशानक्रिया** जलगण्डूषपानम् । **सत्कृत्य** भूतानामुत्पत्तिस्थितिहेतुदोषमकीर्त्तयन् ॥ ३१ ॥

[ **३२ श्लो.** ] **ब्रह्मचर्ये** इत्यादि । **एकमन्न**मेकभिक्षाम् । **कामं** यथेष्टं मधुमांसादिवर्ज्जम् । **श्राद्धे** ब्राह्मण एव । न राजन्यवैश्यौ । 'राजन्यवैश्ययोस्त्वेवं नैतत् कर्म प्रचक्ष्यते' इति ( २।१९० ) **मनुवचनात्** ॥ ३२ ॥

[ **३३ श्लो.** ] **मधुमांसे**त्यादि । **अंजनं** कज्जलं **शुक्तं** सौवीरादि।स्त्रीसंपर्के **अश्लील**मप्रियम्। **परीवादः** परदोषकथनम् । **मनुरपि** ( २।१७७ )–" वर्जयेन्मधुमांसं च गन्धमाल्यरसान् स्त्रियः " इति ।

**रसान्** गुडादीन् । व्याधितस्तु मध्वादीन् भक्षयेदित्याह **बौधायनः** ( २।१।२५ )–
" स चेद्व्याधीयीत कामं गुरोरुच्छिष्टं भेषजार्थं सर्वमश्नीयाद्गुर्वनुज्ञया " । इति ॥ ३३ ॥

[ **३४ श्लो.** ] **क्रिया** निषेकादिक्रियाः । **अस्मै** पुत्राय । **मनुः** (२।१४२ )–
" निषेकादीनि कर्माणि यः करोति यथाविधि । सम्भावयति चान्नेन स विप्रो गुरुरुच्यते " ॥
वेदार्थव्याख्याता गुरुरित्याह **मनुः** ( २।१४९ )–
" अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः । तमपीह गुरुं विन्यात् श्रुतोपक्रियया तया"॥
उपनीय वेदं यः प्रयच्छति स आचार्यः । **मनुः** ( २।१४० )–
"उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" ॥३४॥

[ ३५ श्लो. ] **एकदेश**मित्यादि । **मनुः** ( २।१४१, १४३, १४५ )– "एकदेशं तु वेदस्य वेदाङ्गान्यथ वा पुनः । योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते" ॥ वृतः सन् यज्ञकृत् । "अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्। यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते"॥ अग्न्याधेयमग्न्याधानं पाकयज्ञोऽष्टकादिः। एतेषां गुर्वादीनां यथापूर्वं मान्यता। एभ्यो गुर्वादिभ्यः "उपाध्यायाद्दशाचार्य आचार्याणां शतं पिता। पितुः शतगुणं माता गौरवेणातिरिच्यते"॥(३५)॥

[ ३६ श्लो. ] **प्रतिवेद**मित्यादि। **प्रतिवेदं** स्वशाखोक्तव्रतम्। 'एका देया तिस्रो देयाः षड्देया इति पंचादेः फलभूमा कल्पनीया'। शक्त्यशक्तिभ्यां व्यवस्थेति कश्चित्। **मनुः** ( ३।२ )– "वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्। अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत्"॥ **केशान्तः** संस्कारविशेषः। 'स गर्भषोडशे वर्षे कर्त्तव्यः साग्निकेन गर्भादिः संख्या वर्षाणाम्'। इति **बौधायनात्** ॥ ३६ ॥

[ ३७ श्लो. ] **आषोडशा**दित्यादि । आङित्यभिविधिः संबध्यते सर्वत्र। **परो**ऽन्त्यः ॥३७॥

[ ३८ श्लो. ] **अत ऊर्ध्व**मित्यादि। **अतः** षोडशाद्वतःकृतव्रात्यस्तोमास्तूपनयनेऽधिक्रियन्ते॥३८॥

[ ३९ श्लो. ] पूर्वोक्ते द्विजहेतुमाह। **मातुरि**त्यादि। **मौंजी**ति ह्रस्वश्छान्दसः ॥ ३९ ॥

[ ४० श्लो. ] वेदानां स्तुतिमाह **यज्ञानामि**त्यादि। **निःश्रेयसकरो** मोक्षकरः ॥ ४० ॥

[४१।४३ श्लो.] प्रतिवेदं स्तुतिमाह। **मधुने**त्यादि। **पितॄन्** वस्वादीन्। **ऋचो** ऋग्वेदः। **अन्वहं** प्रत्यहम्। **घृतामृतैः** सोमरसैः। **आज्येन** घृतेन। **स त्वि**ति। **सोमः** सोमलतारसः॥(४१-४३)॥

[ ४४–श्लो. ] **मेदसे**त्यादि। मांसास्थिमध्ये धातुः । **आंगिरसं** अङ्गिरसा सामवेदैकदेशं पृथक्कृतं अभिचारप्रधानकम्। **शक्तितः** शक्त्यनतिक्रमेण।

[४५–४६ श्लो.] **वाकोवाक**मित्यादि। **वाकोवाक्यं** प्रश्नोत्तरम्। **पुराणं** प्रसिद्धम्। **नाराशंसी** नारायणस्तुतिप्रकाशिका। क्वचिन्नाराशंस्योऽथेति पाठः 'सुपां सुलुक्' इति समर्थनीयः। **गाथिका** गानयुक्ताः। **इतिहासो** महाभारतादिः। **विद्या** उपनिषत्। **ओदनं** भक्तम्। एतैर्मांसाद्यैस्तर्पणं **करोति** । मध्वादिना च देवादीनाम्।

[ ४७–४८ श्लो. ] तृप्तिकर्त्तुः किं तत्राह। **ते तृप्ताः** कर्त्तारं तृप्तिं कुर्वीति कामफलैरपेक्षितफलैः। **यं यं क्रतुं** क्रतुप्रतिपादकवेदभागम्। **अस्य** क्रतोः। **आप्नुयात्** प्राप्नुयात्। स्तुतिरियं अन्यथा बहुवित्तप्रयाससाध्ये क्रतौ न प्रवर्त्तेत।

**त्रिरि**त्यादि। त्रिवारं। **इह** जन्मनि। **स्वाध्यायवान्** वेदयुक्तः। ( ४७–४८ ) ॥

[ ४९ श्लो. ] नैष्ठिकमामरणकालं कृतब्रह्मचर्यसङ्कल्पः स **नैष्ठिकः**। **पत्न्यां** सवर्णायाम्। **यथा मनुः** ( २।४७ ) 'गुरुदारे सवर्णे वा' इति। **वैश्वानरे** ब्रह्मचर्याग्नौ। ( ४९ ) ॥

[ ५० श्लो. ] **अनेनो**क्तेन। **देहं** देहावच्छिन्नं जीवम्। **इह** संसारे। एतेनापवर्गः फलमुक्तम्॥५०॥

इति **ब्रह्मचारिप्रकरणव्याख्या** ।

## अथ विवाहप्रकरणम् ३

**गुरवे त्विति ।** वरमिति । 'गामश्वम्' इत्यादि ( २।२४९ ) **मनूक्तं** धनं दक्षिणां दत्त्वा गुर्वनुज्ञया सुतैलादिना स्नायात् । ¹ब्रह्मचारी उपकुर्वाणः । स त्रिविधः । यथा **हारीतः**—" त्रयः स्नातका भवन्ति । विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातकश्च" इति ॥ "यः समाप्य वेदमसमाप्य व्रतानि समावर्त्तते स विद्यास्नातकः । यो व्रतं वेदमसमाप्य समावर्त्तते स व्रतस्नातकः । य उभयं समाप्य समावर्त्तते स विद्याव्रतस्नातकः । स चेच्छया गृहस्थो वानप्रस्थः परिव्राजको वा भवेत् " । **विष्णुपुराणम्** ( ३।१०।३४ )—

" गृहीतविद्यो गुरवे दत्वा तु गुरुदक्षिणाम् । गार्हस्थ्यमिच्छन् भूपाल कुर्य्याद्दारपरिग्रहम् ॥
" अथवा सकलं कालं नयेत् सङ्कल्पपूर्वकम् । गुरोः शुश्रूषणं कुर्य्यात् तत्पुत्रादेरथापि वा ।
" वैखानसो वाऽपि भवेत्परिव्राड् वाऽथवेच्छया " ॥ ५१ ॥

[ **५२ श्लो.** ] **अविप्लुतेत्यादि** । अविनष्टब्रह्मचर्योऽन्येनापरिणीतां कमनीयां कनिष्ठाम् । शुभलक्षणमुक्तं **भविष्ये**—

" अंगुल्यः संहता वृत्ता ऋज्व्यः सूक्ष्मनखास्तथा । कुर्वन्त्यनष्टमैश्वर्यं राजभोगं च योषिताम्" ॥

शुभलक्षणाम् । **असपिण्डां** पितुर्मातुश्चेत्यर्थः । असमानार्ष इत्यनेन सपिण्डनिषेधप्राप्तावपि असपिण्डामिति सपिण्डसंज्ञातः सप्तमपञ्चमपर्यन्तयोर्निषेधार्थम् । **मनुः** ( ३।५ )–

"असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने" ॥

द्विश्चकारान्मातुरसगोत्रा पितुरसपिण्डा च ग्राह्या । **व्यासः**—

" सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि । जन्मनाम्नोरविज्ञाने उद्वहेदविशङ्कितः " ॥

मातृपदेन मातामहो लक्षणीयः । अन्यथा पितृपदेन तद्बोधान्मातृपदमनर्थकं स्यात् । **मिथुन-**साध्येऽग्निहोत्रादौ । **दारकर्मणि** विवाहे ॥ ५२ ॥

[**५३ श्लो.**] **अरोगिणीं** दीर्घरोगाद्यनुपसृष्टाम् । **भ्रातृमतीमिति** गुप्तपुत्रिकाशंकानिरासार्थम् । **मनुः** ( ३।११ )–

"यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता । नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया" ॥

**आर्षः** प्रवरः । समानप्रवरगोत्राभ्यामजातां

" पितुःपितुःस्वसुः पुत्राः पितुर्मातुःस्वसुः सुताः । पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥
" मातुर्मातुःस्वसुः पुत्रा मातुर्मातुःस्वसुः सुताः । मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः" ॥

**नारदः** ( १२।७ )–

" आ सप्तमात्पञ्चमाच्च बन्धुभ्यः पितृमातृतः । अविवाह्या सगोत्रा च समानप्रवरा तथा ॥
" सप्तमे पञ्चमे वाऽपि येषां वैवाहिकी क्रिया । ते च सन्तानिनः सर्वे पतिताः शूद्रतां गताः" ॥

**विष्णुः**(२४।९–१०)—

" न सगोत्रां न समानप्रवरां विन्देत मातृतस्त्वा पञ्चमात् पितृतस्त्वा सप्तमात् " ।

---

१ ब्रह्मचर्येण वा इति पाठः ।

**पैठीनसिः**—" असमानार्षगोत्रजां कन्यां वरयेत् । परिहरेत् पञ्च मातृतः सप्त पितृतः पञ्च पितृतो वा " । " त्रीन् मातृतः पञ्च पितृतो वा " इति तु आसुरादिविवाहविषयं क्षत्रियादि-विषयं वा ॥ ५३ ॥

[ ५४ श्लो. ] **दशपूरुषे**त्यादि । मातृतः पञ्च पितृतः पञ्च एवं दशपुरुषात् । **श्रोत्रियाणां** वेदाध्ययनशीलानाम् । **स्फीतात्** गोऽजाविधनधान्ययुक्तात् । कुष्ठ्यपस्मारादिरोगसहितात् । पारुष्यादिदोषसहितात् । यथा वर्ज्जयेदित्यनुवृत्तौ **मनुः** ( ३।७ )–

" हीनक्रियं निष्पुरुषं निश्छन्दोरोमशार्शसम् । क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च " ॥

निष्पुरुषं स्त्रीजनकम् । आमयावि मन्दानलम् ॥ ५४ ॥

[ ५५ श्लो. ] **एतैर्द्द**शपुरुषाविख्यातत्वादिगुणैः । पित्रादिना **पुंस्त्वे परीक्षिते** । पुंस्त्वलक्षणमाह **देवलः**—

"रेतोऽस्य प्लवते नाप्सु ह्लादि मूत्रं च फेनिलम् । पुमान् स्याल्लक्षणैरेतैर्विपरीतं नपुंसकम् ॥

" न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति । मेढ्रश्चोन्मादशुक्राभ्यां हीनः क्लीबः स उच्यते" ॥ ५५ ॥

[ ५६ श्लो. ] **यदुच्यत** इत्यादि ।

" शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते । ते च स्वा चैव राज्ञस्तु ताश्च स्वा चाग्रजन्मनः" ॥

इति (३।१३) **मन्वादिभि**रुक्तं तन्मम न संमतम् । हेतुमाह **यस्मात्तत्रे**त्यादि । अत एव **श्रुतिः** (ऐ. ब्रा. ७।३) "तज्जाया जाया भवति यद्यस्यां जायते पुनः" इति । ननु वचनविरोधः स्यात्

" आपद्यपि न कर्त्तव्या शूद्रा भार्या द्विजेन तु । तस्यां तस्य प्रसूतस्य निष्कृतिर्नोपपद्यते " ॥

इति **शङ्ख**विरोधात् ।

न च व्यतिक्रमविषयोऽयं निषेधः 'तिस्रो वर्णानुपूर्व्येण' एवं विवाहस्य **याज्ञवल्क्ये**नोक्तत्वात् विरोधापत्तेः 'एतन्मम मतम्' इति उक्तानुपपत्तेश्च । अथ हेतुमन्निगदस्वरसादपत्यार्थं शूद्रापरिणयननिषेधो याज्ञवल्कीयः । रत्यर्थं तु कर्त्तव्यमेव । अत एव 'रत्यर्थमेव सा तस्य रागान्धस्य प्रकीर्त्तिता' इति **विष्णु**वचनम् ।

नैतत् । 'चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजा' तथा 'शूद्रायां पारशवः' 'विन्नास्वेष विधिः स्मृतः' इति **याज्ञवल्क्य**विरोधात् । अत एव सवर्णायामपत्यसम्भवेऽयं निषेधोऽसम्भवे विधिरित्यपि निरस्तम् ।

उच्यते । आनुपूर्व्येणाधिवेदननिमित्ते सत्यापदि शूद्राविवाहविषयं **मन्वा**दिवचनं व्यतिक्रमेणापद्यपि शूद्रापरिणयननिषेधपरमित्यविरोधः । अत एव **मनुः** ( ३ १४ )–

" न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतः । कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते " ॥

इति व्यतिक्रमविवाहविषयमिदम् । क्षत्रियावैश्यापरिणयनमप्यानुपूर्व्येण निमित्तादेव । यथा **ब्रह्मपुराणे**—

"कदापि शूद्रकन्यास्तु न विवाह्या द्विजातिभिः । विवाह्य ब्राह्मणीं पश्चाद्विवाह्याः कश्चिदेव तु" ॥

---

१ व्यवहारे १२५ श्लोकः । २ आचारे ९१ । ३ आचारे ९२ ।

क्वचिदधिवेदननिमित्ते दारमरणे वा । "कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः" (३।१३) इति **मनु**वचनादकामस्य यद्याश्रमासमर्थस्य स्नातकव्रतचरणनिषेधात् ॥ ५६ ॥

[ ५७ श्लो. ] क्षत्रियादिविवाहप्राप्तावनुक्तमर्थमाह । **तिस्रो** ब्राह्मणीक्षत्रियावैश्याः ॥

[ ५८ श्लो. ] आनुपूर्व्यमाह । **ब्राह्म** इति । विशेषमाह **मनुः** ( ३।२७ )–

" आच्छाद्य चार्हयित्वा च श्रुतशीलवते स्वयम् । आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्त्तितः "॥

**बौधायनः** ( १।११।२ ) " श्रुतशीले विज्ञाय ब्रह्मचारिणेऽर्थिने देयेति स ब्राह्मः " । ब्रह्मचारिणेऽजातस्त्रीसंपर्काय । **एकविंशति** "दश पूर्वान् दश परान् आत्मना चैकविंशतिम्' इति (३।३७) **मनुभिः** समानार्थम् ॥ ५८ ॥

[ ५९ श्लो ] **यज्ञस्थे**त्यादि । विशेषमाह **बौधायनः** (११।१।५)–'दक्षिणासु दीयमानासु'[1]। दानमिति शेषः । **देवलः**–

" प्रदानं यत्र कन्यायाः सह गोमिथुनेन च । शस्ताय चासगोत्राय तमार्षमृषयो विदुः "॥

**गोद्वयमिति** प्रदर्शनार्थम् । " एकं गोमिथुनं द्वे वा वरादादाय शक्तितः " ( ३।२९ ) इति **मनु**वचनात् ॥ ५९ ॥

[ ६० श्लो. ] ' चरतां सह धर्मं ' चरतामिति नियमं कृत्वा कन्यादानं **कायः** । कः प्रजापतिर्देवताऽस्येति प्राजापत्य इत्यर्थः । **पावये**त्पवित्रीकरोति ॥ ६० ॥

[ ६१ श्लो. ] **आसुर** इत्यादि । **मनुः** ( ३।३१ )–

"ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः। कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते"॥

**समयान्मिथः** अन्योन्यानुरागेण । **मनुः** ( ३।३२ )–

" इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च । गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः" ॥

वैवाहिको विधिर्यथा **देवलः**–

" गान्धर्वादिविवाहेषु विधिर्वैवाहिको मतः । कर्त्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः"॥

" आलिङ्गनादिरूपो यत्र संयोगो न मैथुनं क्षतयोनित्वेन पाणिग्रहणाभावात्"इति **विश्वरूपः** । अत एव **मनुः** ( ८।२२७ )–

"पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः। नाकन्यासु क्वचिन्नॄणां गुप्तधर्मक्रिया हि ताः" ॥

**युद्धमिति** बलात्कारोपलक्षणम् । **मनुः** (३।३३) "प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते" इति । कन्याया मद्यादिना प्रमत्ताया गमनम् । तथा च **मनुः** (३।३४)–

" सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति । स पापिष्ठो विवाहानां पैशाचः प्रथितोऽष्टमः " ॥

चत्वारो विवाहाः **शस्ताः** प्रशस्ताः ॥ ६१ ॥

[ ६२ श्लो. ] पाणिर्ग्राह्य इति क्वचित्पुस्तके पाठः । **सवर्णा**सूह्यमानासु । वरधृतैकदेश-**शरम्** । **प्रतोदो** यष्टिः । शूद्रायास्तु किंचिदपि नोक्तमसंमतत्वात् । **मनुना** तु " वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने " (३।४४) इत्युक्तम् ॥ ६२ ॥

---

१ 'नीयमानासु' इत्यपि पाठः ।

[ ६३–६४ श्लो. ] पितेत्यादि । प्रकृतिस्थः पातित्यौन्मत्त्यादिदोषरहितः । विष्णुः ( २४।३८ )–" पिता पितामहो भ्राता सकुल्यो मातामहो माता च " इति ।

कन्याप्रदः पूर्वाभावे। प्रकृतिस्थः पर इति मातामहाभावे माता च। अप्रयच्छन्निति । कन्यादानाधिकारी कन्यामददत् ऋतावृतौ प्रत्यृतु । गम्यं कुलशीलादिना गमनार्हम् । पूर्वोक्तानां दातॄणामभावे ऋतुत्रयमतीत्यैव स्वयं कुर्यात् । विष्णुः ( २४।४० )– " ऋतुत्रयमतीत्यैव कन्या कुर्यात्स्वयं वरम् । ऋतुत्रये व्यतीते तु प्रभुः कन्या स्वयंवरे" ॥६४॥

[ ६५ श्लो. ] सकृदेकवारम् । तां ब्राह्मादिपञ्चविवाहयुक्ताम् । दत्तां वाग्दत्ताम् । हरेदासुरादियुक्ताम् । पूर्वादश्रोत्रियत्वादिदोषयुक्तात् । श्रेयान् श्रोत्रियत्वादिगुणयुक्तः । सकृद्दाने नारदः ( १२।२९ )—

" ब्राह्मादिषु विवाहेषु पंचस्वेष विधिः स्मृतः । गुणापेक्षं भवेद्दानमासुरादाविति स्मृतम् " ॥ आदिना राक्षसपैशाचग्रहणम् । आव्रजेत् आगच्छेत् ॥ ६५ ॥

[ ६६ श्लो. ] अनाख्यायेत्यादि । दातुः कन्यादोषमभिधाय दाने वरस्य चादुष्टभार्यापरित्यागे उत्तमो दण्डः । वरस्य मृषाकन्यादोषोक्तौ शतम् । वरस्य स्वदोषानभिधाने नारदः— " गूहयित्वात्मनो दोषान् विन्दन्नत्ययमर्हति । वरस्य दत्तनाशश्च भवेत् स्त्री च निवर्त्तते " ॥ अत्ययो दण्डः ॥ ६६ ॥

[६७ श्लो.] अक्षता चेत्यादि। योनिक्षता अक्षता च संस्कृता पुनरूढा। एतच्च ज्ञानार्थमुच्यते न प्रवृत्त्यर्थम् । प्रतिलोमवत् । " वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला । या सप्तमं पदं नीत्वा मुक्ता गृहीतगर्भा च इति सप्तविधा पुनर्भूः स्वैरिणी " इति । अनयोर्भेदमाह नारदः ( १२।४५ )–

"परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् । पुनर्भूस्त्रिविधा तासां स्वैरिणी च चतुर्विधा"॥ स्वैरिणी कुलटा ॥ ६७ ॥

[ ६८ श्लो. ] अपुत्रामित्यादि । घृताभ्यक्त इयाद्गच्छेत् । मनुः ( ९।५९ )– "देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया । प्रजेप्सिताऽधिगन्तव्या संतानस्य परिक्षये" ॥ ऋतौ पुनर्गच्छेदित्याह मनुः–

"ऋतौ तु तस्यां स्नातायां वाग्यतस्तामसौ निशि । स्वश्मश्रुनखरोमाणां गन्धस्पर्शानवेदयन्"॥

[ ६९ श्लो. ] आ गर्भसम्भवात् गर्भसम्भवपर्यन्तम् । अन्यथा गर्भानन्तरं गते । ननु देवराद्वेति मनुना नियोगमुक्त्वा पुनः स्वयमेव कथं

"नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः।अन्यस्मिन्हि नियुञ्जाना धर्मं हन्युः सनातनम्"॥ इति ( ९।६४ ) निषेधस्य समाधानमाह–

"उक्तो नियोगो मनुना निषिद्धः स्वयमेव तु । युगह्रासादशक्योऽसौ कर्तुमन्यैर्विधानतः॥
"तपोज्ञानसमायुक्ता कृतत्रेतायुगे नराः । द्वापरे च कलौ नृणां शक्तिहानिर्हि जायते ॥
"अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः । न शक्यन्तेऽधुना कर्तुं शक्तिहीनैरिदंतनैः" ॥६९॥

[७० श्लो.] हृतेत्यादि । परिभूतां तिरस्कृताम् । बृहस्पतिः–

" हीनवर्णोपभुक्ता च त्याज्या वध्या च सा भवेत् " ॥ ७० ॥

[७१ श्लो.] सोमः शौचं ददौ तासामिति । तासां ताभ्य इत्यर्थः । सुपां सुलुगित्यादिना । " रोमोद्भवे शशी भुंक्ते गन्धर्वः कुचदर्शने । अनलस्तु रजोयोगे स्त्रियो भुंक्ते तु नान्यथा " ॥ इति बृहस्पतिवचनात् । 'सोमोऽददद्गन्धर्वाय' इत्यादिश्रुतेः सोमादिभिरवस्थाभेदेनोपभुक्तानां शुद्धिरिति वचनं अल्पशौचहेतुभिरासामपावनं न भवति ॥ ७१ ॥

[७२ श्लो.] व्यभिचारादिति । 'रजसा स्त्री मनोदुष्टा' इति (५।१०७) मनुवचनान्मानसव्यभिचारे रजसा शुद्धिः । हीनोत्पादितगर्भे त्यागः । अर्थाद्गर्भं विना कायिकवाचनिकव्यवहारे प्रायश्चित्तम् । आदिपदोपादानात्तु

" भ्रूणघ्न्यस्तु परित्याज्या शिष्यगा गुरुगा तथा । पतिघ्नी च विशेषेण जुंगितोपगता च या " ॥

इति वसिष्ठोक्तानां ग्रहणम् । जुंगितः कुत्सितः प्रतिलोमतः ॥ ७२ ॥

[७३ श्लो.] सुरापीत्यादि । सुरापी द्विजस्त्री । व्याधिता गृहकृत्यकरणासमर्था । धूर्ता चांचल्यप्रधाना । अधिवेत्तव्या विवाहान्तरं कर्त्तव्यमित्यर्थः । विशेषमाह मनुः (९।८१)–

"वन्ध्याष्टमेऽधिवेद्याऽब्दे दशमे तु मृतप्रजा । एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी" ॥ ७३ ॥

[७४ श्लो.] अधिविन्ना पूर्वपूर्वाधिविन्ना विवाहिता अन्यथा भर्तव्या । आनुकूल्यं प्रीतिः ॥

[७५ श्लो.] मृत इत्यादि । अन्यं पुरुषान्तरं उपगच्छति वाक्कायमनोभिः । परत्र मोदते क्रीडते उमालोके । सतीफलमिदम् ॥ ७५ ॥

[७६ श्लो.] आज्ञासम्पादिनीं आज्ञां कुर्वतीम् । वीरसूं पुत्रवतीम् । स्ववित्तस्य तृतीयभागः स्त्रियै दाप्यः । अद्रव्यो द्रव्यहीनः ॥ ७६ ॥

[७७ श्लो.] स्त्रीभिरित्यादि । परः प्रकृष्टः । आ शुद्धेः शुद्धिपर्यन्तं प्रतीक्ष्यः प्रतीक्षा कर्त्तव्या ॥

[७८ श्लो.] लोकानन्त्यमित्यादि । लोकानन्त्यं प्राप्नोति । दिवः प्राप्तिश्च भवति । यथाक्रमं पुत्रपौत्रप्रपौत्रोत्पादनेन । यथाह मनुः (९।१३७)–

"पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम्" ॥

सुरक्षिता गृहकृत्यादिना । तथा च मनुः (९।११)–

"अर्थस्य सङ्ग्रहे चैनां व्यये चैव नियोजयेत् । शौचे धर्मेऽन्नपंक्त्यां च पारिणाह्यस्य चेक्षणे" ॥

पारिणाह्यं कुण्डलकटकादिः ॥ ७८ ॥

[७९ श्लो.] षोडशेत्यादि । गर्भधारणयोग्यो रजोयुक्तोऽवस्थाविशेषः स्त्रिया ऋतुः । "युग्मासु गच्छेत्पुत्रार्थी कन्याऽयुग्मासु रात्रिषु" इति (३।४८) मनुवचनात् । ब्रह्मचार्य्येव भवति । ब्रह्मचर्य्यस्य फलं प्राप्नोति । पर्वाणि अमावास्यादीन् । आद्या रात्रीर्नोपगच्छेत् । यत्तु शंखवचनम्–

"शुद्धा भर्तुश्चतुर्थेऽह्नि अशुद्धा दैवपित्र्ययोः । दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति" ॥

इति तच्छुश्रूषादिविषयम् । उत्कृष्टलक्षण्यपुत्रार्थं तु चतुर्थरात्रिवर्ज्जनम् । अत एव " लक्षण्यं जनयेत्पुमान् " इत्युक्तम् ।

ऋतुकाले गन्तव्यमिति अग्निहोत्रं जुहोतीतिवन्न विधिः । गमनस्य रागप्राप्तत्वात् न च पञ्चनखभक्षणवत्परिसंख्या । स्वार्थहान्यस्वार्थपरिकल्पनरागप्राप्तबाधात्मकत्रिदोषदुष्टत्वात् ।

नियमस्तु समे देशे यजतीतिवदिष्यत एव । ऋताववश्यं गन्तव्यमित्यर्थः । रागतः पक्षे प्राप्तौ पक्षेऽप्राप्तौ विधिः । अत एवागमने दोषमाह **यमः**–

"ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति। घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः"॥

एतत्प्रथमपुत्रपर्यन्तम्। 'प्रजया पितृभ्यः'[1] इति श्रुतेः। दशास्यां पुत्रानाधेहीति तु प्रशंसार्थः ॥७९॥

[८० श्लो.] **एवमुक्तसमये । क्षामामल्पबलां** हविष्यादिना । **शस्ते** शोभने । **इन्दौ** चन्द्रे । **सकृदे**कवारं गच्छन् । **लक्षण्यं** लक्षणयुक्तम् ॥ ८० ॥

[८१ श्लो.] **यथाकामी** काममनतिक्रम्य यथाकामं तदस्यास्तीति । अवश्यं गच्छेदिति नियमविधिः । **स्त्रीणा**मिन्द्रदत्तं **वरमनुस्मरन्** । इन्द्रवरदाने **वसिष्ठः** ( ५।८ )–" विज्ञायते हीन्द्र"...इत्यादि "आप्रसवान्मिथुनीभवाम" इत्यन्तम्। **स्वदारेषु** क्रीडितः । नान्यत्र। **स्त्रियो रक्ष्या** इति।"सूक्ष्मेभ्योऽपि प्रमादेभ्यः स्त्रियो रक्ष्या विशेषतः" (९।५) इति **मनुवचनात्** ॥८१॥

[८२ श्लो.] **भर्त्रे**त्यादि । **पूजा** भूषणादिदानम् । तथा **मनुः** ( ३।५९ )–

"तस्मादेताः सदाऽभ्यर्च्या भूषणाच्छादनाशनैः। भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च"॥८२॥

[८३ श्लो.] स्त्रीधर्ममाह। **संयते**त्यादि। **संयतः** संयमो यथास्थानम्। **उपस्करा** उलूखलमुसलादि। **दक्षा** गृहकृत्यनिपुणा ॥ ८३ ॥

[८४ श्लो.] **क्रीडां** कन्दुकादिभिः । **हास्यं** प्रकाशहास्यम् । **प्रोषितः** प्रवासस्थो भर्त्ता यस्याः सा ॥ ८४ ॥

[८५ श्लो.] **रक्षे**दित्यादि । **विन्नां** विवाहिताम् । **क्वचित्** कस्यांचिदवस्थायामपीत्यर्थः । ज्ञात्यभावे राजा । तथा च **नारदः** –

"तत्सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाः। पक्षद्वये परिक्षीणे राजा भर्त्ता स्त्रिया मतः"॥८५॥

[८६ श्लो.] पित्रित्यादि । **अन्यथा एतैर्हीना निन्दिता** ॥ ८६ ॥

[८७ श्लो.] **पती**त्यादि । प्रीतिविषये हिताचरणे च । आचारमाहतुः **शंखलिखितौ**–

" स्त्री नानुक्त्वा बहिर्निष्क्रामेत् । नानुत्तरीयं परिधावेत् । नानुसेवेत गन्धमाल्याभरणानि । न परपुरुषमभिभाषेदन्यत्र वणिक्प्रव्रजितवृद्धेभ्यः। न नाभिं दर्शयेत् । कुलवधूरा गुल्फाभ्यां वासः परिदध्यात् । न स्तनौ विवृतौ कुर्यात् । न हसेदनपावृतं सहजनैः " इति । अनपावृतं मुखं कृत्वेत्यर्थः ॥ ८७ ॥

[८८ श्लो.] **सत्यामि**त्यादि । **धर्मकार्यं** अग्निहोत्रादि । **सवर्णा** सजातीया । **अन्या** असवर्णा । **सवर्णासु** बह्वीषु । **धर्म्ये** देवपित्र्ये । **ज्येष्ठा** विवाहतः । **इतराः** कनिष्ठाः । प्रकारान्तरं **छन्दोगपरिशिष्टे**–

"दिनक्रमेण वा कर्म यथाज्येष्ठं प्रयत्नतः । विभज्य सह वा कुर्य्युर्यथाज्ञानमशाठ्यवत्"॥८८॥

[८९ श्लो.] **दाहयित्वे**त्यादि । **वृत्तवतीं** सदाचारां कनिष्ठामपि । **मनुः** ( ५।१६६ )–

" एवंवृत्तां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीम् । दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित् "॥

यत्तु "यो दहेदग्निहोत्रेण स्वेन भार्यां कथंचन। स स्त्री सम्पद्यते तेन भार्या चास्य पुमान् भवेत्"॥ तदसवर्णाविषयम् । **अविलम्बयन्** विलम्बमकुर्वन् ॥ ८९ ॥

---

१ तैत्तिरीयसंहितायाम् २–५–१ ।

## अथ वर्णजातिविवेकप्रकरणम् ४

[ ९० श्लो. ] **सवर्णेभ्य** इत्यादि। सवर्णा शूद्रेतरपत्नी ग्राह्या। विवाहेष्वित्यभिधानात्। अथ वर्णविवेकः सवर्णेभ्य इति सिद्धे यत्सवर्णास्वित्यभिधानं तदव्यभिचारार्थम्। अत एव **मनुः** ( १०।५ ) "सवर्णेषु च तल्पासु पत्नीष्वक्षतयोनिषु। आनुलोम्येन सम्भूता जात्या ज्ञेयास्तथैव ते"॥ अनेकजातीया भवन्तीत्यर्थः। अक्षतयोनिष्वित्यव्यभिचारार्थम्। आनुलोम्यग्रहणं संस्कारानुगमार्थम्। ते **पुत्रा** यदि प्रशस्तास्तदा वंशस्य वर्द्धकाः स्युः। तथा च **मनुः** (३।२४)– "चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः। राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः"॥९०॥

[ ९१ श्लो. ] सजातीयोत्पत्तिमुक्त्वा विजातीयोत्पत्तिमाह। **विप्रादित्यादि**। पारशव इति संज्ञान्तरम्। अत एव **मनुः** (९।१७८)–"स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः"॥९१॥

[ ९२ श्लो. ] **वैश्येत्यादि**। **एष विधिः**। राजन्यादिविधिः।

[ ९३ श्लो. ] अनुलोममुक्त्वा प्रतिलोममाह। **ब्राह्मण्यामित्यादि**। **सर्वधर्म्मो–** ऽत्राहिंसादिसामान्यधर्मव्यतिरिक्तः॥ ९३॥

[ ९४ श्लो. ] **क्षत्रियेत्यादि**। **मागधम्** जातिविशेषम्।

[ ९५ श्लो. ] संकरजं संकरमाह। **माहिष्येणेत्यादि**। शूद्रायामूढायां वैश्याज्जाता **करणी**। वैश्यायामूढायां क्षत्रियाज्जातो **माहिष्यः**। **बौधायनस्तु**(१।९।५)–"वैश्याच्छूद्रकन्यायां जातो रथकार" इत्याह। तदा गोशब्दवदनेकार्थतैवास्य। एषां च कर्म **मन्वादिभिरुक्तम्** (१०।४७)– "सूतानामश्वसारथ्यं अंबष्ठानां चिकित्सितम्" इत्यादि। एषां मध्ये प्रतिलोमजा **असज्जातीयाः**। अनुलोमजाः **सज्जातीयाः**॥ ९५॥

[ ९६ श्लो ] करणादपकृष्टोत्कृष्टजात्योरपकर्षोत्कर्षावाह। **जात्युत्कर्षेत्यादि**। **युगे** 'जन्मनीति' **विश्वः**। स्त्रीपुरुषयुग इति केचित्।

यदि शूद्रायामूढायां जाता कन्या यद्यपरस्मै ब्राह्मणाय विवाहेन दीयते तज्जाता कन्या पुनरपरस्मै ब्राह्मणायेत्येवं क्रमेण सप्तकन्यापरिवर्त्तने सप्तमे जन्मनि स्त्रीपुरुषयुगमे वा उत्तरोत्तरविलक्षणमातृजत्वेन जात्युत्कर्षो ब्राह्मणजातीयो भवति। ब्राह्मणादिष्वधिक्रियत इत्यर्थः। **पञ्चमे वेति** क्षत्रियविषयम्। यथा क्षत्रियपरिणीतशूद्राजातकन्यासन्तानस्य पूर्वोक्तरीत्या पञ्चमे क्षत्रियत्वं, अर्थाद्वैश्यपरिणीतस्य शूद्रसन्तानस्य युगत्रये वैश्यत्वं, तथा **कर्मव्यत्यये** क्रियावैपरीत्ये साम्यम्। व्यत्यये केन सह साम्यं तत्राह। **उत्तराधरं** उत्तरस्याधरजातिसाम्यम्। तदपि **पूर्ववत्** विवाहपरंपरया सप्तमे पञ्चमे वेत्यर्थः। यथा ब्राह्मण-जातिजा कन्या शूद्रवृत्तिना ब्राह्मणेन परिणीता कन्यान्तरं प्रसूते साऽपि हीनब्राह्मणपरिणीतेत्येवं क्रमेण सप्तमे युगे शूद्रकर्मभागी भवतीत्यर्थः। एवं क्षत्रियकन्याहीनक्षत्रियविवाहे पञ्चमे शूद्रत्वम्। अर्थाद्वैश्यकन्यासंततेर्युगत्रये शूद्रत्वम्। तथा च **मनुः** ( १०।६४-६५ )— "शूद्रायां ब्राह्मणाज्जाता श्रेयसा चेत् प्रजायते। अश्रेयान् श्रेयसीं जातिं गच्छत्या सप्तमाद्युगात्॥ "शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैव शूद्रताम्। क्षत्रियात् ब्राह्मणत्वं च वैश्याज्जातस्तथैव च"॥९६॥

## अथ गृहस्थधर्मप्रकरणम् ५

[ ९७ श्लो. ] स्नातकधर्ममाह । **कर्मेत्यादि** । स्मार्त्तं सायंप्रातर्होमादि । **मनुः** ( ३।६७)–– "वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि" । **दायो** दायभागः । **श्रौतं** दर्शपौर्णमासादि । **वैतानिकाग्निषु** गार्हपत्याहवनीयदक्षिणाग्निषु ॥ ९७ ॥

[ ९८ श्लो. ] **शरीरेत्यादि** । शरीरजन्यावश्यकमूत्रपुरीषोत्सर्गः । दन्तधावनानन्तरं स्नानमाह **दक्षः** ( २।६ )—

"उषःकाले तु संप्राप्ते शौचं कृत्वा यथार्थवत् । ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम्"॥

उषःकालो लोहितदिगुपलक्षितकालात् प्राक् ईषद्दिक्प्रकाशवान् कालः । ' खट्वाश्रयं च शयनं वर्ज्जयेद्दन्तधावनम्" इति ब्रह्मचारिणः प्रतिषेधविधिः **वृद्धशातातपादिषु** अनुसन्धेयः ॥९८॥

[ ९९ श्लो. ] हुत्वेत्यादि । **सूर्यदैवत्यान्** 'उदुत्यं जातवेदसम्' इत्यादीन् । ततो **वेदार्थानधिगच्छेच्च** व्याकरणनिरुक्तादिभिः । **शास्त्राणि** तर्कमीमांसादीनि ।

[ १०० श्लो. ] **उपेयादित्यादि** । **ईश्वरं** देशाधिपम् । **योगोऽ**लब्धलाभः । **क्षेमो** लब्धपरिरक्षणम् । तत उक्तविधिना मध्याह्ने स्नानं कृत्वा देवानां पितॄणां तर्पणं च कृत्वा गन्धादिना श्राद्धेन च देवान् पितॄनर्च्चयेत् ।

[ १०१ श्लो. ] **वेदाथर्वेत्यादि** । अथर्ववेदस्य शान्तिकपौष्टिकाद्युपयुक्तत्वेन पृथङ्निर्देशः । **इतिहासो** महाभारतादिः । **जपयज्ञो** ब्रह्मयज्ञान्तर्गतः । **आध्यात्मिकीं** उपनिषदम् ।

[ १०२ श्लो. ] बलीत्यादि । **बलिकर्म** बलिदानम् । **स्वधा** श्राद्धम् । एते बलिदानादयो यथासंख्यं भूतादीनां महायज्ञाः ॥

[ १०३ श्लो. ] **देवेभ्य** इत्यादि "गृहमेधिनो यदशनीयं तेन होमो बलयश्च"(२।२।३।१२) इत्यापस्तम्बवचनात् । **अन्नं** बहिर्भूमौ दद्यात् । **शातातपः**—

"लौकिके वैदिके चैव हुताच्छिष्टे जले क्षितौ । वैश्वदेवस्तु कर्त्तव्यः पञ्चसूनापनुत्तये" ॥

[ १०४ श्लो. ] **अन्नमित्यादि** । **मनुष्येभ्यः** सनकादिभ्यः । अभावे जलमपि नित्यश्राद्धम् । **स्वाध्यायमिति** पुनरभिधानं यज्ञचतुष्टयस्यासम्भवे स्वाध्यायस्यावश्यकार्थम् । तथा च **गौतमः**(५।४।५।)–"नित्यस्वाध्यायः पितृभ्यश्चोदकदानम्"।नात्मने किंतु देवादीनुद्दिश्येत्यर्थः।

[ १०५ श्लो. ] **बालेत्यादि** । **स्ववासिनी** नवोढा स्त्रियः स्नुषा दुहितरश्च । अत्रातिथिभोजनमेतेभ्यः प्राक् बोद्धव्यं "भोजयेत्पूर्वमातिथिकुमारव्याधितगर्भिणीसुवासिनीस्थविरान्" (५।२३) इति **गौतमस्मरणात्** । तथा **मनुः** ( ३।११४ )—

"सुवासिनीः कुमारांश्च रोगिणो गर्भिणीस्तथा । अतिथिभ्योग्र एवैतान् भोजयेदविचारयन्" ॥

[ १०६ श्लो. ] **आपोशानेत्यादि** । **अनग्नमाच्छादितम्** । **अमृतं** सोत्तरीयकम् । **उपरिष्टात्पूर्वम्** । तथाऽधस्तात् पश्चात् । **शातातपः**—

"परिधानमापोशानं पूर्वमाच्छादनं परम् । भवत्यन्नमनग्नं हि सोत्तरीयं तथाऽमृतम्" ॥

[ १०७ श्लो. ] **अतिथीत्यादि । अतिथयो** ब्राह्मणादयो युगपदुपस्थितास्तथा ब्राह्मणेषु भोजितेषु क्षत्रियादयोऽनुक्रमेण भोजनीयाः । सूर्येऽस्तमितेऽन्नासम्भवे मधुरवाक्येन विश्रामार्थं भूम्यां शयनार्थं तृणादिना पादादिप्रक्षालनार्थोदकेनाप्यातिथिरप्रत्याख्येयः ।
तथा च **मनुः** ( ३।१११,१०५ )--

" यदि त्वतिथिधर्मेण क्षत्रियो गृहमाव्रजेत् । भुक्तवत्सु तु विप्रेषु कामं तमपि भोजयेत् ॥
" अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना । काले प्राप्तस्त्वकाले वा नासत्कृतो गृहे वसेत् " ॥

[ १०८ श्लो. ] **सत्कृत्येत्यादि** । सत्कृत्य ' स्वस्तिवाच्य भिक्षादानपूर्वम् ' ( ५।१६ ) इति **गौतमस्मरणात्** । प्रथमं जलं हस्ते दत्त्वेत्यर्थः । **भिक्षवे** परिव्राजकाय । **सुव्रताय** ब्रह्मचारिणे । **काले** भोजनकाले । **बान्धवो** मातुलादिसुतः ॥ १०८ ॥

[ १०९ श्लो. ] **महोक्षमित्यादि । उपकल्पयेत्** व्यापादयेत् मारयेत् । **वसिष्ठः**—"अपि ब्राह्मणाय राजन्याय वा महोक्षं महाजं वा पचेत् । एवमस्यातिथ्यं कुर्वन्ति " ।
एतद्गोवधेनातिथ्यं न कलौ । यथा **ब्रह्मपुराणम्**--

" दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः । गोत्रान्मातृसपिण्डाद्वा विवाहो गोवधस्तथा ॥
"नराश्वमेधौ पलं च कलौ वर्ज्या द्विजातिभिः" ॥ **सत्क्रियां** पूजाम् । **सूनृतं** मधुरम् ॥१०९॥

[ ११० श्लो. ] अतिथिप्रसङ्गेन स्नातकादीनां पूजामाह । **स्नातको** विद्याव्रताभ्याम् । **पार्थिवो**ऽभिषिक्तक्षत्रियः । **विवाह्यो** जामाता । एते संवत्सरमनतिक्रम्यैव गृहमागता गृह्योक्तेन मधुपर्काख्येन कर्मणा **अर्घ्याः** पूज्याः । **ऋत्विजः** पुनर्यज्ञं प्रत्युपस्थिताः संवत्सरमध्येऽपि । राजस्नातकौ अब्दादूर्ध्वं यज्ञे । यथा **मनुः** ( ३।१२० )--

"राजा च श्रोत्रियश्चैव यज्ञकर्मण्युपस्थितौ । मधुपर्केण संपूज्यौ न त्वयज्ञ इति स्थितिः"॥११०॥

[ १११ श्लो. ] **अध्वनीन इति । अध्वनीनो**ऽध्वगामी । **मनुः**—"नैकग्रामीणमतिथिं " तथा " एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः " इति । **श्रोत्रियः** एकशाखाध्यायी । यथा **बौधायनः** "एकां शाखामधीत्य श्रोत्रियो भवति" । **मान्यौ** पूज्यौ विशेषेण ॥१११॥

[ ११२ श्लो. ] **परपाकेत्यादि । परपाकरुचिः** आतिथ्यलोभेन ग्रामान्तरं गत्वेत्यर्थः ।
" पूरयेदुदरस्यार्द्धमन्नैर्भागं जलेन तु । वायोः संचारणार्थाय चतुर्थमवशेषयेत् " इति **विष्णुपुराण**वचनादधिकभोजनं वर्जयेत् ॥ ११२ ॥

[ ११३ श्लो. ] अतिथिमित्यादि । आ सीमान्तं ग्रामस्य वाट्या वा सीमापर्यन्तम् । **आसीत** सहोपविष्टस्तिष्ठेत् ॥

[ ११४ श्लो. ] **उपास्य** उपासनां कृत्वा । **भृत्यैर्**भरणीयैः । पूर्वं " संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनं " उक्तम् । अत्र तु युगपदेव ॥ ११४ ॥

---

१ अ. ३।१०३ । २ अ. ३ श्लो. १०२ ।

[ ११५ श्लो. ] **धर्मार्थं** इत्यादि । **यथाशक्ति** शक्त्यनतिक्रमेण । **न हापयेत्** न त्यजेत् । रात्रेः पश्चिमयामो **ब्राह्ममुहूर्त्तः** । मुहूर्त्तशब्दोऽयमौपचारिकः । तत्र दृष्टादृष्टोपकारकं **चिन्तयेत्** ॥ ११५ ॥

[ ११६ श्लो. ] **विद्येत्यादि** । एतैर्विद्यादिभिः प्रचुरैः **शूद्रोऽपि** नवत्यधिके वयसि पूजामर्हति । यथा **मनुः**—" शूद्रोऽपि दशमीं गतः " । इति ॥ ११६ ॥

[ ११७ श्लो. ] वृद्धेत्यादि । **वृद्धो** नवत्यधिकः । **स्नातः** कृतसमावर्त्तनः । **वरो** विवाहार्थमुपस्थितः । **चक्री** चक्रयुक्तयानारूढः । एषां **पन्थास्त्यक्तव्यः** । **स्नातक** इति ' सुपां सुलुक्' इत्यादिना कलोपः ॥ ११७ ॥

[ ११८ श्लो. ] इज्येत्यादि । **इज्या** ज्योतिष्टोमादिः । **अध्ययनं** वेदपाठः । इज्यादित्रयं प्रतिग्रहत्रयं चाधिकं ब्राह्मणस्य ॥ ११८ ॥

[ ११९ श्लो. ] प्रधानमित्यादि । **पालनं** चौरादिभ्यो रक्षणम् । **कुसीदं** वृद्धिजीविका । **वाणिज्यं** समयं क्रीत्वा लाभोपार्जनम् ॥ ११९ ॥

[ १२० श्लो. ] शूद्रेत्यादि । **द्विजशुश्रूषा** प्रधानं कर्म । **मनुः ( १०।१२५ )**—

"उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च । पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः"॥

पुलाकोऽसारधान्यम् । परिच्छदाः पीठछत्रादयः । **तया** द्विजोपकल्पितवृत्त्या द्विजानामुपकारं कुर्वन् जीवन् च कुर्वन् **जीवेत्** । कृषिं च यथा **नरसिंहपुराणम्** —

" अयाचितप्रदाता स्यात् कृषिं वृत्त्यर्थमाचरेत् । पुराणं शृणुयान्नित्यं नरसिंहस्य पूजनम् " ॥

[ १२१ श्लो. ] नमस्कारेणेत्यादि । **न हापयेत्** न त्यजेत् । **नमस्कारेण मंत्रेण** न वैदिकेन पौराणिकेन । यथा **भविष्यपुराण**मधिकृत्य

" अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना । श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन "॥

**गौतमः** ( १०।६६ )—" अनुमतोऽस्य नमस्कारो मन्त्रः " । **भार्यारतिः** स्वस्य भार्यायां रतिः । यत्तु **( ५।८९ )**—

" न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविःकृतम् । न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्"॥

इति **मनुना** निषिद्धं तदसच्छूद्रविषयम् । " उच्छिष्टमन्नं दातव्यम् "इति विधानात् ॥ १२१ ॥

[ १२२ श्लो. ] अहिंसेत्यादि । मनोनियमो **दमः** । **क्षमा** कृतापकारेऽप्यपकारानाचरणम् । एतेऽहिंसादयो वर्णानां अनुलोमप्रतिलोमजानां संकीर्णानां धर्मस्य कारणम् ॥ १२२ ॥

[ १२३ श्लो. ] **वय** इत्यादि । यथा **जाबालः** " बालः पांशुक्रीडां सुगन्ध्यादिकं वृद्धो धर्मानुसरणं बुद्धिमान् महाभाष्यादिश्रवणं अर्थवान् बहुदानं वाग्मी राजदौत्यं सुवेशो राजसन्निधिं श्रुतशास्त्रो वेदार्थनिर्वचनं विशुद्धाभिजनः कुलीनकन्यावरणं यागकर्मावृतः पशुहिंसनम् " । एवं वयःप्रभृतीनामुचितां चेष्टामाचरेत् । **अजिह्मामकुटिलाम्** । **अशठां दम्भादिरहिताम्** ॥ १२३ ॥

[ १२४ श्लो. ] त्रैवार्षिकेत्यादि। यस्य पोष्यवर्गसहितस्य वर्षत्रयनिर्वाहोचितमन्नमधिकं वा विद्यते स सोमयागं कुर्यात्। यस्य च वार्षिकमन्नं विद्यते स प्राक्सौमिकीः चातुर्मास्यादिकाः क्रियाः कुर्यात्॥ १२४॥

[ १२५ श्लो. ] प्रतीत्यादि। चैत्रशुक्लप्रतिपदादिवर्षगणनेन वर्षसमाप्तौ प्रतिसंवत्सरं सोमयागः कार्यः। उदगयनदक्षिणायनादौ पशुयागः। व्रीहियवपाकेषु आग्रहायण्यादिभिश्चतुर्भिश्चतुर्भिर्मासैश्चातुर्मास्यानि। 'त्र्यर्तुः संवत्सर' इति मतेन नित्यानि चैतानि। यथा जाबालः—

"सायं प्रातः सदाऽत्यन्तं वैतानं जुहुयाद्द्विजः। दर्शेन चातुर्मासान्ते पौर्णमासेन चैव हि॥
"सस्यपक्तौ नवेष्ट्या च चातुर्मासै ऋतोर्मुखे। अयनादौ निरूढेण पशुना वत्सरेऽपि वा।
"समानसोमयागेन त्विष्ट्या युक्तो न संशयः"॥ १२५॥

[ १२६ श्लो. ] एषामित्यादि। अकरणे प्रत्यवायपरिहारार्थं प्रायश्चित्तरूपेयमिष्टिः। विद्यमाने प्रथमकल्पसंपादकधने हीनकल्पं न कुर्वीत॥ १२६॥

[ १२७ श्लो. ] चाण्डाल इत्यादि। भासो वनकुक्कुटः॥ १२७॥

[ १२८ श्लो. ] कुसूलेत्यादि। द्वादशदिनोचितधान्याधारा कोष्ठी कुसूलः। षड्दिनोचितधान्याधारः कुम्भी। ते धान्यं यस्य सः।

ईहा चेष्टा। तस्यां भवमैहिकम्। त्रिदिनोचितमैहिकं यस्य सः त्र्यैहिकः। सद्योऽश्वस्तनः। मञ्जर्यात्मकोऽनेकधान्योच्चयः शिलः। एकैकधान्यादिगुडकोच्चयनमुञ्छः॥ १२८॥

---

## अथ स्नातकधर्मप्रकरणम् ६

[ १२९ श्लो. ] न स्वाध्यायेत्यादि। वेदाभ्यासविरोधिनमर्थमत्यन्तेश्वरोपसर्पणसाध्यं न चेष्टेत। यतस्ततः पतितादेः। न शास्त्रविरुद्धप्रतिग्रहेण। प्रसङ्गेन गीतवाद्यादिना। सन्तुष्टो नित्यं भवेत्। तथा च मनुः (४।१५)—"नेहेतार्थान् प्रसङ्गेन न विरुद्धेन कर्मणा"॥१२९॥

[ १३० श्लो. ] राजेत्यादि। सीदन् दुःखीभवन्। व्यासः—

"द्विजातिभ्यो धनं लिप्सेत् प्रशस्तेभ्यो द्विजोत्तमः। अपि वा जातिमात्रेभ्यो न तु शूद्रात् कदाचन"॥

अत्यन्तापदि मनुः ( ९।२८३ )

"आपद्गतः सकृद्गृह्णन् भुञ्जानोऽपि यतस्ततः। नैनसा लिप्यते विप्रो ज्वलनार्कसमो हि सः"॥

दम्भी कपटधर्मव्यवहारी। हैतुको वेदविरुद्धतर्कव्यवहारी। पाषंडी वेदबाह्यव्यवहारी। बकवृत्तिमाह मनुः ( ४।१९६ )—

"अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः"॥१३०॥

[ १३१ श्लो. ] शुक्लेत्यादि। सति विभवे शुक्लाम्बरधरः। "न तु भार्याया अन्तिकेऽश्रीमद्वीर्यवदपत्यं भवति" इति श्रुतेः। संस्थित ऊर्द्धावस्थितः॥ १३१॥

[ १३२ श्लो. ] न संशयमित्यादि। तस्करव्याघ्राद्युपहत्या प्राणसंशयस्थानं न गच्छेत्। प्रयोजनं विना अप्रियमहितमसत्यं च कस्यापि न वदेत्। वार्द्धुषिकमाह वसः—

"समर्घं परमादाय महार्घं यः प्रयच्छति। स वै वार्द्धुषिको ज्ञेयो यश्च वृद्ध्या प्रयोजयेत्"॥ १३२॥

[ १३३ श्लो. ] दाक्षेत्यादि । दाक्षायणं स्वर्णकुण्डलमस्यास्तीति । ब्रह्मसूत्रे द्वे ' यज्ञोपवीते द्वे धार्ये ' इति **बौधायनात्** । **मनुः** ( ४।३६ )—

"वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् । यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले " ॥ **मृदुद्धृता** ॥ १३३ ॥

[ १३४ श्लो. ] **न मेहेते**त्यादि । नदीतटपरच्छायावर्त्मगोष्ठवारिभस्मसु न मूत्रपुरीषं कुर्यादिति । अर्कादीनामभिमुखं च न कुर्यात् । **सन्ध्योदयास्तमया** । सन्ध्याया आभिमुख्ये सन्ध्यायां न कुर्यादिति भावः ॥ १३४ ॥

[ १३५ श्लो. ] नेक्षेतेत्यादि । **नेक्षेतार्कमिति** विधिमन्तरेण । ' न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनात् ' इति **सांख्यायनम्** । **वा** समुच्चये । **मूत्रं पुरीषं च** नेक्षेत । **राहूपरक्तौ** सूर्याचन्द्रमसौ **ग्रहांश्चाशुचिर्नेक्षेत** ॥ १३५ ॥

[ १३६ श्लो. ] अयं मे वज्रेत्यादि । " अयं मे वज्रः सर्वं पाप्मानमहनत् " इति मन्त्रमुच्चारयन् सति **वर्षति** देवे । पश्चिमशिरा न शयीत ॥ १३६ ॥

[ १३७ श्लो. ] **ष्ठीवनेत्यादि** । **विषं** कृत्रिमाकृत्रिमम् । क्वचित्पुस्तके विषाणीति स्थाने रेतांसीति पाठः ॥ १३७ ॥

[ १३८ श्लो. ] जलमित्यादि । **धर्मघ्नै**र्धर्मनाशकैः श्वादिभिर्न **क्रीडेत** । **व्याधितैः** सहैकशय्यां न शयीत । क्वचित्संवशेदिति पाठः ॥ १३८ ॥

[ १३९ श्लो. ] विरुद्धमित्यादि । **विरुद्धं** कांस्यपात्रे पादप्रक्षालनादिकम् । बाहुभ्यां नदीतरणम् ॥

[ १४० श्लो. ] **नाचक्षीते**त्यादि । न परकीयां **गां** वत्सं पाययन्तीं कथयेत् । न प्राकारादिलंघनेन प्रविशेत् । क्षत्रियप्रतिग्रहं न कुर्यात् । राजान्तेवासीत्यस्य निषेधः ॥ १४० ॥

[ १४१ श्लो. ] **प्रतिग्रह** इत्यादि । **सूना** वधस्थानं तदस्यास्तीति **सूनी** । मांसविक्रयी । व्याध इति यावत् । **चक्री** तैलिकः । **ध्वजी** मद्यविक्रयी । एते पूर्वात् यथोत्तरं दुष्टास्तस्मादधार्मिकस्य नृपतेः प्रतिग्रहं न कुर्यात् ॥ १४१ ॥

[ १४२ श्लो. ] **अध्याये**त्यादि । अधीयत इत्यध्यायः । कर्मणि घञा वेद उक्तः । संस्कार उपाकर्माख्यं **श्रावण्यां पौर्णमास्यां वा** । शब्दान्नक्षत्रान्तरेणापि श्रावण एव । **ओषधिभावे** सस्यप्रादुर्भावे ॥ १४२ ॥

[ १४३ श्लो. ] **पौषे**त्यादि । पौषस्य रोहिणीनक्षत्रे कृष्णाष्टम्यां वा उत्सर्गाख्यं कर्म । **जलान्ते** जलसमीपे । गृहाद्बहिः ॥ १४३ ॥

[ १४४ श्लो. ] **त्र्यहमित्यादि** । **प्रेतेषु** मृतेषु । **शिष्य** उपनीतः । **ऋत्विक्** सर्वयाजकः । **गुरु**राचार्यः । **बन्धुः** स्वगृहस्थमातृष्वस्रीयादिः । **स्वशाखाश्रोत्रियः** सन्निधानस्थः संपूर्णशाखाध्यायी । एतेषां भरणे त्र्यहमनध्यायः । **मनुः** ( ४।११९ )—" उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् " । यत्तु " विरमेत् पक्षिणीं रात्रिं " इति ( ४।९७ ) **मनुनोक्तं** तद्विद्याप्राप्तिमात्रकामस्य न धार्मिकस्य ॥ १४४ ॥

[ १४५ श्लो. ] **सन्ध्येत्यादि** । **निर्वात** अन्तरीक्षभव उत्पातध्वनिः । **उल्का** महती । **वेदं** वेदाध्ययनम् । **द्युनिश**महोरात्रम् । **आरण्यक**मुपनिषत् । यच्च **गोतम**वचनम् ( १६।२२ )— "आकालिकानिर्घातभूकंपराहुदर्शनोल्काः " तदुत्कटनिर्घातविषयम्। " प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितानिःस्वने । सज्योतिः स्यादनध्यायः" इति (४।१०६) **मनुना** यदुक्तं तद्वर्षाविषयम् ॥ १४५॥

[ १४६ श्लो. ] **पञ्चदश्यामित्यादि** । **पञ्चदश्यां** अमावास्यां पौर्णमास्याम् । **ऋतुसन्धिषु** । ऋतुद्वयसन्धिवर्तिनीषु प्रतिपत्सु । **श्राद्धिकमिति** । पार्वणे द्युनिशं बोध्यम् ।
" प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम्* । त्र्यहं न कीर्त्तयेत्ब्रह्म राज्ञो राहोश्च सूतके " ॥ ( ४।११० ) इति **मनूक्तमे**कोद्दिष्टपरम् ॥ १४६ ॥

[ १४७ श्लो. ] **पश्वित्यादि** । शिष्योपाध्याययोः पठतोर्मध्ये गमने कृते । **उच्छ्रये** उत्थाने ॥ १४७ ॥

[ १४८ श्लो. ] **श्वक्रोष्ट्रित्यादि** । **साम** और्ध्वस्वरः । **बाणो** वीणा । **आर्त्तः** शोकादिपीडितः । सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान् विदुरिति वक्ष्यमाणेन सम्बन्धः । एवमत्र त्रयोदशनिमित्तानि ॥ १४८ ॥

[ १४९ श्लो. ] **देश** इत्यादि । **देशोऽशुचौ** । अष्टावत्र निमित्तानि ॥ १४९ ॥

[ १५० श्लो. ] **पांस्वित्यादि** । धावतस्तत्कालं गच्छतः ॥ १५० ॥

[ १५१ श्लो. ] **खरोष्ट्रेत्यादि** । **ईरिण**मूषरम् । संख्याप्रतिपालनिमित्तानां परस्परासंकीर्णप्रतिपादनार्थम् ॥ १५१ ॥

[ १५२ श्लो. ] **देवेत्यादि** । देवः पाषाणादिमयः । **मनुः** ( ४।१३० )—
"देवतानां गुरो राज्ञः स्नातकाचार्ययोस्तथा । नाक्रामेत्कामतश्छायां बभ्रुणो दीक्षितस्य च"॥ बभ्रुः पिंगलः ॥ १५२ ॥

[ १५३ श्लो. ] **विप्रेत्यादि** । **विप्रो**ऽभिचारशङ्कया । **अहि**र्दंशशङ्कया । **आत्मा**ऽपि मन्दभाग्योऽहमितिकृत्वा नावमन्तव्यः । **आ मृत्यो**र्मृत्युपर्य्यन्तं श्रीसिध्यर्थमुद्यमं कुर्यात् । गोप्यदोषं कस्याप्यग्रे न कथयेत् ॥ १५३ ॥

[ १५४ श्लो. ] **दूरादित्यादि** । **दूरात्** गृहस्य । **नित्यं** यावज्जीवम् ॥ १५४ ॥

[ १५५ श्लो. ] **गोब्राह्मणेत्यादि** । गवादीनां निन्दाताडने न कुर्यात् । **मनुः** (४।१६४)—
"परस्य दण्डं नोद्यच्छेत्क्रुद्धो नैनं निपातयेत् । अन्यत्र पुत्राच्छिष्याद्वा शिष्ट्यर्थं ताडयेत्तु तौ" ॥ शिष्टिः शिक्षा ॥ १५५ ॥

[ १५६ श्लो. ] **कर्मेत्यादि** । **अस्वर्ग्यं** यथा बहुपुत्रादिबहुपोष्यस्य सर्वस्वदानम् । **लोकविद्विष्टं** । कलौ मद्यं अष्टकायां गोवधादि । **मनुः** ( ४।१७६ )—
"परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ । धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेव च" ॥१५६॥

[ १५७-१५८ श्लो. ] **मात्रित्यादि** । **जामयो** भगिनीस्नुषाद्याः । **सम्बन्धि** जामात्रादि । **संश्रितो**ऽनुजीवी । **बान्धवा** मातृपितृपक्षाः । एभिः सह कलहादि कर्म अकृत्वा मनूक्तान् ब्राह्मादिलोकान् स्वीकरोति ।

---

* भोजनमित्यपरः पाठः

यथा **मनुः** ( ४।१८२–८५ )—

"आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः। अतिथिस्त्विन्द्रलोकेशो देवलोकस्य चर्त्विजः॥

"जामयोऽप्सरसां लोके वैश्वदेवस्य बान्धवाः। सम्बन्धिन अपां लोके पृथिव्यां मातृमातुलौ॥

"आकाशेशास्तु विज्ञेया बालवृद्धकृशातुराः। भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः॥

"छाया स्वा दासवर्गस्तु दुहिता कृपणं परम्"॥ १५७–१५८॥

[ १५९ श्लो. ] **पश्चेत्यादि**। परकृतं वारि **परवारि**। 'तस्मात् परकृतान् सेतून् कूपांश्च परिवर्जयेत्' इति ( २।३।६ ) **बौधायनात्**। अतः प्रतिष्ठिते चाप्रतिष्ठिते च पुष्करिण्यादौ पञ्च पिण्डानुद्धृत्य स्नातव्यम्। **देवखातं** देवकृतखातम्। **गर्त्त** उक्तश्छन्दोगपरिशिष्टे—

"धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते। न ता नदीशब्दवाच्या गर्त्तास्ते परिकीर्त्तिताः"॥

धनुश्चतुर्हस्तप्रमाणम्। **प्रस्रवणं** निर्झरः॥ १५९॥

[ १६० श्लो. ] **परेत्यादि**। **अदत्तानीति** स्वाम्यभावोऽनुमत्यभावश्च विवक्षितः॥ १६०॥

[ १६१ श्लो. ] **कदर्येत्यादि**। कदर्यमाह **नारदः**—

"आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन्। लोभाद्यः प्रचिनोत्यर्थान् स कदर्य इति स्मृतः"॥

**वैणो** वेणुच्छेदनजीवी। **गणजीवी** गणयाजकः। एषामन्नं न भोक्तव्यमिति वक्ष्यमाणेन सम्बन्धः॥ १६१॥

[ १६२ श्लो. ] **चिकित्सा**दिवृत्तिः। **आतुरः** अपटुः। **क्रुद्धो** नित्यरुष्टः। **क्रूरो**ऽनृजुः। **उग्रो** दारुणकर्मा॥ १६२॥

[ १६३ श्लो. ] **अवीरेत्यादि**। **अवीरा** पतिपुत्ररहिता स्त्री। **तुन्नवायः** सौचिकः। **श्वजीवी** कुक्कुरपोषकः॥ १६३॥

[ १६४ श्लो. ] **नृशंसेत्यादि**। **नृशंसो** निर्दयः। **राजा** जनपदेश्वरः। **रजको** वस्त्रागकृत्। **सहोपपतिवेश्मा** जारेण सहैकवेश्मास्थितः॥ १६४॥

[ १६५ श्लो. ] **पिशुनेत्यादि** परगुणासहिष्णुः। **अनृती** मिथ्यावदनशीलः। साक्षादपलापको वा। **चाक्रिकः** शकटोपजीवी। **बन्दी** स्तुतिपाठवृत्तिः। कदर्यादिबन्दिपर्यन्तानामन्नं न भोक्तव्यमिति संबंधः॥ १६५॥

[ १६६ श्लो. ] **शूद्रेत्यादि**।

"स्वदासो नापितो गोपः कुम्भकारः कृषीवलः। ब्राह्मणैरपि भोज्यान्नाः पञ्चैते शूद्रयोनयः"॥

इति **देवल**वचनात्। दासादयः स्वस्यैव ग्राह्याः। **आत्मनिवेदकः** कुलतः शीलतश्च स्वाभिप्रायप्रकाशकः। एषामामान्नमनापदि ग्राह्यम्। आपदि तु पक्वान्नमपि॥ १६६॥

## अथ भक्ष्याभक्ष्यप्रकरणम् ७

[ १६७ श्लो. ] **अनेत्यादि**। **अनर्चितम**वज्ञादत्तम्। **वृथामांसं** देवादिभ्योऽदत्तम्। **शुक्तं** रसांतरयुतं यदम्लतां गतम्। **उच्छिष्टमगुरोर्भुक्तावशिष्टं** वर्जयेदिति वक्ष्यमाणेन संबंधः॥

[ १६८ श्लो. ] **उदक्येत्यादि**। **उदक्या** रजस्वला। **संघुष्टं** को भोजनार्थीति संघुष्य यद्दीयते। **पर्यायान्नं** यदन्नमन्यव्यपदेशेन दीयते। यथा—

"ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणोऽददत्। उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणं चरेत्"॥

[ १६९ श्लो. ] पर्युषतादीनां प्रतिप्रसवमाह । **अन्नमिति । स्नेहाक्तं** घृताभ्यक्तम् । स्नेहाक्तं शुक्तमपि त्याज्यम् । यवविकारोऽपि । यथा—

" अपूपाश्च करंभाश्च धानावटकसक्तवः । शाकं मांसमपूपं च सूपं कृसरमेव च ।

"यवागूं पायसं चैव यच्चान्यत् स्नेहसंयुतम् । सर्वं पर्युषितं भोज्यं शुक्तं तु परिवर्जयेत्" ॥ तथा—

"शुक्तानि हि द्विजोऽन्नानि न भुञ्जीत कदाचन । प्रक्षालितानि निर्दोषाण्यापद्धर्मो यथा भवेत् ॥

"मसूरं माषसंयुक्तं तथा पर्युषितं च यत् । तत्तु प्रक्षालितं भुक्त्वा भुंजीताज्याभिघारितम्" ॥ शुक्तं पर्युषितमपि मसूरं माषसंयुक्तं प्रक्षाल्याभिघार्यापदि भुञ्जीत ॥ १६९ ॥

[ १७० श्लो. ] **सन्धिनी**त्यादि । **सन्धिनी** ऋतुमती । **अनिर्दशा** अनिर्गतदशाहा नवप्रसूता । **अवत्सा** वत्सरहिता । गोग्रहणमजामहिष्युपलक्षणार्थम् । **एकशफा** अश्वादयः । **स्त्रैणं** स्त्रीभवम् । आरण्यकं महिषीवर्ज्जम् । "आरण्यानां च सर्वेषां मृगाणां महिषीं विना" इति (५।९) **मनु**वचनात् । **भविष्यपुराणम्**—

" कापिलं यः पिबेच्छूद्रो नरके परिपच्यते । हुतशेषं पिबेत् विप्रो विप्रः स्यादन्यथा पशुः " ॥ इति ॥ १७० ॥

[ १७१ श्लो. ] **देवे**त्यादि । अन्नं बल्याद्यर्थं । **हविः** पुरोडाशादि । प्राङ् निवेदनात् । **शिग्रुः** शोभांजनः । ' लोहितान् वृक्षनिर्यासान् ' इति ( ५।६ ) **मनु**वचनात् **लोहिता**निति वृक्षनिर्यासविशेषणम् । तेन कर्पूरादीनामनिषेधः । छेदनप्रभवानलोहितानपि रसान् । **विड्जानि** साक्षाद्विष्ठाभवानि तण्डुलीयकादीनि । अमेध्यभूजातेषु नैतादित्याह **बौधायनः** ( १।५।५१ )— "अमेध्यभूस्था ये वृक्षाः पुष्पमूलफलोपगाः । तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च" ॥ वृक्षग्रहणात् शाकादीनां निषेधः । **कवकं** छत्राकं वर्जयेदिति पूर्वोक्तेन संबंधः ॥ १७१ ॥

[ १७२ श्लो. ] **क्रव्यादे**त्यादि । **क्रव्यादा** गृध्रादयः । **प्रतुदाः** प्रतुद्य चञ्च्वा ये भक्षयन्ति दार्वाघाटादयः । **एकशफा** अश्वादयः । एतान् वर्जयेदित्युक्तक्रियया सम्बन्धः ॥ १७२ ॥

[ १७३ श्लो. ] **कोयष्टी**त्यादि । **कोयष्टिः** कोङ् इति प्रसिद्धः । **प्लवः** प्लवेनाहारं यः करोति । पानिकौडीति प्रसिद्धः । **विष्किरा** नखैर्विकीर्य ये भक्षयन्ति श्येनादयः । **कृसर**स्तिलतण्डुलसिद्ध ओदनः । "तिलतण्डुलसम्पर्कः कृसरः सो विधीयत" इति **छन्दोगपरिशिष्टात्** । **संयावः** क्षीरगुडघृतगोधूमचूर्णसिद्धः । तकरिकेति प्रसिद्धः । **शष्कुली** पूलिका । कृसरादीन् देवाद्यनुद्देशेन कृतान् वर्जयेत् ॥ १७३ ॥

[ १७४ श्लो. ] **कलेत्यादि । कलविंकं** चटकं । ग्रामवासित्वेन निषेधे सिद्धे आरण्यकनिषेधार्थं पुनरुपादानम् । **रज्जुवालः** षट्पदकुक्कुटः । **जालपादाः** शरारिप्रभृतयः । जालपादत्वेन निषेधे सिद्धे पुनः प्रतिषेधो निन्दातिशयार्थः । **अज्ञातान्** जातितो नामतो रसवीर्यविपाकेन वर्जयेदिति सम्बन्धः ॥ १७४ ॥

[ १७५ श्लो. ] **चाषांश्चे**त्यादि । **चाषः** किकीदिविः । **रक्तपादाः** कादंबप्रभृतयः । **सौनं** वधस्थानस्थितं शुष्कमांसम् । चाषादीन् मत्स्यांश्च भक्ष्यानेवेच्छया विधिमन्तरेण भक्षयित्वा त्र्यहमुपवसेत् । प्रायश्चित्ताभिधानं लाघवार्थम् ॥ १७५ ॥

[ १७६ श्लो. ] **पलांडु**मित्यादि । **लशुनगृंजनौ** पलांडोरवान्तरभेदौ । तथा **चायुर्वेदे**—

" लशुनो दीर्घपत्रश्च पिच्छगन्धो महौषधम् । तरुंडश्च पलांडुश्च नरलंकः पलांकिका ॥

" गृंजनो यवनेष्टश्च पलांडोर्दश जातयः " ॥

**छत्राकं** भूमिजं काष्ठजं च। अत्यन्ताभ्यासे तु **मनुः** ( ४।१९ )—

"छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम्। पलाण्डुं गृंजनं चैव मत्या जग्ध्वा पतेद्द्विजः"॥१७६॥

[ १७७ श्लो. ] **भक्ष्या** इति । **सेधाशल्लकौ** बहुकंटकस्वल्पकंटकभेदेन द्विविधौ। परिसंख्याविधिः । पञ्चनखानां मार्जारादीनां मध्ये एते भक्ष्या नान्ये । यन्मनुना ( ५।१८ ) "कृतं खड्गकूर्मशशांस्तथा" इति खड्गग्रहणं तच्छ्राद्धविषयम् । सिंह इव तुण्डो यस्य स आडि इति ख्यातः । बहुवचनात् ऋष्यन्तरोक्ता मत्स्या भक्ष्याः ॥ १७७ ॥

[ १७८ श्लो. ] **तथेत्यादि** । **पाठीनो** वोदालः । **राजीवो** रागिः । अत्र द्विजातिग्रहणं शूद्रव्युदासार्थम् । तेन शूद्रस्य लशुनभक्षणादात्रप्रतिषेधः । हे मुनयः शृणुतेत्यर्थः ॥ १७८ ॥

[ १७९ श्लो. ] **प्राणेत्यादि** । **प्राणात्यये** रोगेणान्नाभावेन वा । **द्विजकाम्यया** सकृत् । "सकृद्ब्राह्मणकाम्यया" इति वचनात् । एतत्पंचके मांसभक्षणे दोषाभावः । **देवलः**—

"भक्षयन्नपि मांसानि शेषभोजी न लिप्यते । औषधार्थमशक्तौ वा नियोगाद्यज्ञकारणात् ॥"

**यमः**-"भक्षयेत् प्रोक्षितं मांसं सकृद्ब्राह्मणकाम्यया। दैवे नियुक्तः श्राद्धे वा नियमे तु विवर्ज्जयेत्"॥

एष्वेव निमित्तेषु भक्षणे दोषाभावमभिधाय वर्जने महाफलत्वमाह **मनुः** ( ५।५६ )—

" न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला "॥१७९॥

[ १८० श्लो. ] अविहितपशुमारणे दोषमाह । **वसेदित्यादि** । **पशुरोमाभिः** पशुरोमसंख्यकैः । **यन्मनुना** ( ५।५१ )—

" अनुमन्ता विशसिता निहन्ता क्रयविक्रयी । संस्कर्त्ता चोपहर्त्ता च खादकश्चाष्टघातकाः" ॥

इत्युक्तं तदशास्त्रीयपशुवधविषयम् ॥ १८० ॥

[ १८१ श्लो. ] वर्जने फलमाह । **सर्वेत्यादि** । पूर्वोक्तनिमित्तेषु मांसभक्षणवर्ज्जनसंकल्पादेतानि फलानि भवन्ति । **मुनिर्वानप्रस्थः** ॥ १८१ ॥

इति भक्ष्याभक्ष्यप्रकरणम् ।

## अथ द्रव्यशुद्धिप्रकरणम् ८

[१८२-१८३ श्लो.] **सौवर्णेत्यादि** । **अब्ज**शंखादिपात्रम् । **ऊर्द्ध्वपात्रं** द्रोणकलशादि । **ग्रहो** यज्ञपात्रविशेषः । **आश्मं** अश्मपात्रम् । वंशादिविदलनिर्मित एवाभेदविवक्षया **विदलः** । एवं चर्मापि । एषां उच्छिष्टघृतादिलेपाभावेऽपि 'वारिणा शुद्धिरिष्यते' इति सम्बन्धः । उच्छिष्टघृतादिलेपे तु **मनुः** ( ५।११० )—

"तैजसानां मणीनां च सर्वस्याश्ममयस्य च । भस्मनाऽद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः " ॥

अत्र मृद्भस्मनोर्गंधलेपक्षयैककार्यकरणत्वाद्विकल्पः ॥

**पात्रेत्यादि** । चमसादीनामस्नेहानाम् । चर्वादीनाम् सस्नेहानाम् ॥ १८२—१८३ ॥

[ १८४ श्लो. ] **स्फ्येत्यादि** । **स्फ्यः** छूरिकाकृतिः काष्ठमयः । **अनः** शकटम् । अल्पानां शुद्धिमाह **मनुः** ( ५।११७ )—

"अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम्। प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते"॥१८४॥

[**१८५ श्लो.**] **तक्षेत्यादि।** **दार्वादि** पात्राणां तक्षणाच्छुद्धिः। उपघाते अत्यन्तोपघाते। **विष्णुः** (२३।२–७)—" अत्यन्तोपहतं सर्वं लोहभाण्डमग्नौ प्रतप्तं शुद्ध्यति। मणिमयमश्ममयमब्जमयं च सप्तरात्रं खनित्वा भूमौ स्थापितं शुध्येत्। दन्तास्थिमयं च। तक्षणेन। दारवं मृन्मयं तु जह्यात्"। अत्यन्तोपहतस्य वस्त्रस्य यत् वैरूप्यं प्रक्षालितं सन्न विमुच्यते तच्छिंद्यात्। लोहभाण्डं तैजसपरम्। अत्यन्तोपहतमाह। शारीरैर्मलैः सुराभिश्च यदुपहतं तदत्यन्तोपहतमिति। " नारिकेलादिफलमयपात्राणां गोपुच्छवालरज्वा। गोपुच्छवालरज्वा" इति **बौधायनात्**॥ १८५॥

[**१८६ श्लो.**] **सोषैरित्यादि।** उषः क्षारमृत्तिका तत्सहितैः। **आविकं** कंबलम्। **कौशिकं** त्रसरपट्टम्। **अंशुपट्टं** पट्टशाटकम्। अरिष्टं निंबपत्रम्। कुतपं नेपालकंबलम्।

" ऊर्णापट्टांशुकक्षौमदुकूलानां हि वर्मणाम्। अल्पाशौचे भवेच्छुद्धिः शोषणप्रोक्षणादिभिः॥
" तान्येवामेध्ययुक्तानि नेनिज्यात् क्षारघर्षणैः"॥ १८६॥

[**१८७ श्लो.**] **सगौरेत्यादि।** **क्षौमं** अतसीवृक्षवल्कलनिर्मितम्। श्वेतसर्षपयुक्तैरुदकगोमूत्रैः शुध्यतीत्यर्थः। मद्याद्युपघाते **मनुः**—

" मद्यैर्मूत्रपुरीषैश्च ष्ठीवनैः पूयशोणितैः। संस्पृष्टं नैव शुद्ध्येत्तु पुनः पाकेन मृन्मयम्"॥

मालाकारादेर्माल्यग्रथने करः। **पण्यं** विक्रेतुं प्रसारितं द्रव्यम्। **भैक्ष्यं** ब्रह्मचारिभिक्षाकदंबं रथ्याद्याक्रमणेऽपि। चुम्बनादौ **योषिन्मुखम्**॥ १८७॥

[**१८८ श्लो.**] **भूशुद्धिरित्यादि।** **दाहात्** दहनात्। अल्पोपघाते द्वित्रैरपि। तथा **देवलः**—
"पञ्चधा वा चतुर्धा वा भूरमेध्या विशुध्यति। दुष्टा द्विधा त्रिधा वाऽपि शोध्यते मलिनैकधा"॥
गृहं रजस्वलादिवासदूषितम्। अत्यन्तोपघातादयो यथायथं बोद्धव्याः॥ १८८॥

[**१८९ श्लो.**] **गोघ्रेत्यादि।** **मृत्** मृत्तिका। **विशुद्धये** विशुध्यर्थम्।

[**१९० श्लो.**] **त्रपुसीसेत्यादि।** **त्रपु** रंगम्। उपघातापेक्षया क्षारादिभिर्व्यस्तैः समस्तैश्च। यथा **ब्रह्मपुराणे**—

" सुवर्णरूप्यशंखाऽश्मशुक्तिरत्नमयानि च। कांस्यायस्ताम्ररैत्यानि त्रपुसीसमयानि च॥
"निर्लेपानि तु शुद्ध्यन्ति केवलं मृज्जलेन च। शूद्रोच्छिष्टानि शुद्ध्यन्ति त्रिधा क्षाराऽम्लवारिभिः"॥

रैत्यादि पित्तलमयादि। द्रवशुद्धौ **मनुः** (५।११८)—"द्रवाणां चैव सर्वेषां शुद्धिरुत्प्लवनं स्मृतम्"॥ उत्प्लवनं वस्त्रान्तरितनिर्वापेन कीटाद्युपनयनरूपम्। भाण्डदोषे **बौधायनः**—
" मधूदकयोर्विकारे पात्रान्तरानयनात् शौचमेवं तैलसर्पिषी"। काकाद्युपघाते **यमः**—
"घनानां प्रोक्षणाच्छुद्धिर्द्रवाणामभितापनात्। संस्पर्शाच्च भवेच्छुद्धिरणमग्नेर्घृतस्य च"॥१९०॥

[**१९१ श्लो.**] **अमेध्येत्यादि।** आविकादेरुक्तस्यानुक्तस्य च पित्तलादेर्यावत् शोध्यद्रव्यस्य पुरीषादियुक्तस्याक्तद्रव्यैर्गन्धलेपापगमे मृत्तोयैर्गन्धलेपापकर्षणे शुद्धिः। मृत्तोयैरित्युपलक्षणम्। **शंखः**—

"मलं संयोगजं तज्जं यस्य येनोपहन्यते। तस्य तच्छोधनं प्रोक्तं सामान्यद्रव्यशुद्धिकृत्"॥

उपघातशङ्कायां 'पवित्रं भवतु' इति ब्राह्मणैर्यद्वाचा शंस्तम्। अंबुनिर्णिक्तं जलक्षालितम्। हारीतः—"यद्यन्मीमांस्यं स्यात् तत्तदद्भिः स्पर्शाच्छुद्धिर्भवति"। अज्ञातं उपघातहेतुसंस्थानानुपलम्भेन। मनुः (५।१२६)—

"त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्। अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते"॥१९१॥

[१९२ श्लो.] शुचीत्यादि। गोतृप्तिकृदिति जलपरिमाणमुक्तम्। विष्णुः(२३।४३)—

"भूमिष्ठमुदकं शुद्धं वितृप्ता यत्र गौर्भवेत्। अव्याप्तं चेदमेध्येन तद्वदेव शिलागतम्"॥

क्रव्यादः श्येनादिः। आदिना व्याघ्रादिग्रहणम्॥ १९२॥

[१९३ श्लो.] रश्मीत्यादि। रश्म्यादयश्चाण्डालादिस्पृष्टाः। प्रस्रवणे क्षीरस्रवणे। शातातपः—

"रेणवः शुचयः सर्वे वायुना समुदीरिताः। अन्यत्र रासभाजाविश्वसमूहनिवासजाः"॥१९३॥

[१९४ श्लो.] अजेत्यादि। नरजाश्च शरीरजा मलाः। मनुः (५।१३४)—

"वसा शुक्रमसृक् मज्जा मूत्रविट्कर्णविण्नखाः। श्लेष्माश्रुदूषिकास्वेदो द्वादशैते नृणां मलाः"॥

"निष्ठीव्योक्त्वाऽनृतानि च" इति स्मृत्यन्तरप्राप्ताशुचित्वापवादार्थमिदम्॥ १९४॥

[१९५ श्लो.] मुखेत्यादि। अङ्गेन पतन्तीत्याह मनुः (५।१४०)—"नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गं न यान्ति याः"। बिन्दौ विशेषमाह मनुः (५।१४१)—

"स्पृशन्ति बिन्दवः पादौ य आचामयतः परान्। भौमिकैस्तैः समा ज्ञेया न तैरप्रयतो भवेत्"॥

दन्तसक्तं त्यक्त्वा शुचिः। विशेषमाह गोतमः (१।४१–४२)—"दन्तश्लिष्टेषु दन्तवत्"। अन्यत्र जिह्वाभिघर्षणात्। प्राक्च्युतेरित्येके। आस्रावेष्वद्विद्यान्निगिरन्नेव तच्छुचिः"। एतेन निगरणं त्यागो वेति विकल्पः॥ १९५॥

[१९६ श्लो.] स्नात्वेत्यादि। द्विराचमननिमित्तान्येतानि। स्मृत्यन्तरे मूत्रपुरीषोत्सर्गादिष्वपि द्विराचमनमुक्तम्॥ १९६॥

[१९७ श्लो.] रथ्येत्यादि। अन्त्यश्चाण्डालादिः। पक्वेष्टकानिर्मितानि मठादीनि। पराशरः (७।३६)—

"रथ्याकर्दमतोयानि नावः पन्थास्तृणानि च। स्पर्शनान्न प्रदुष्यन्ति पक्वेष्टकचितानि च"॥१९७॥

## अथ दानप्रकरणम् ९

[१९८ श्लो.] तपस्तप्त्वेत्यादि। ब्रह्माऽध्यापनद्वारेण। गुप्तये रक्षणाय। एतेनाध्यापने श्राद्धदानपात्रतायां धर्मोपदेशे च विप्रस्यैवाधिकारो दर्शितः॥ १९८॥

[१९९ श्लो.] यद्यपि क्षत्रियादीनां पात्रतामाह यमः—

"शूद्रे समगुणं दानं वैश्ये त्रिगुणमुच्यते। क्षत्रिये षड्गुणं प्राहुर्विप्रे दशगुणं पुनः"॥

तथापि प्रतिग्रहविधिना नैतदिति श्रेष्ठत्वादेव ब्राह्मणस्य पात्रतामाह। सर्वस्येत्यादि। श्रुतमर्थावबोधः। धर्मस्य लोकस्य श्रुताध्ययनशालिनो वा दानादिधर्मसंपादकत्वेन स्वामिनः। तेभ्योऽग्निहोत्रादिक्रियानुष्ठातारः श्रेष्ठास्तेभ्यो ब्रह्मज्ञानिनः। तेन श्रुतादीनां पात्रताहेतुत्वम्।

संवर्तः—

"किंचिद्वेदमयं पात्रं किंचित्पात्रं तपोमयम्। असंकीर्णं तु यत्पात्रं तत् पात्रं तारयिष्यति"॥

असंकीर्णं योनिसंकरशून्यम्॥ १९९॥

---

१ मनुस्मृ. अ. ५ श्लो. १४४। २ ल (ला?) ल इति स्यातः।

[ २०० श्लो. ] **न विद्येति। वृत्तं** सदाचाररूपम्। **इमे** विद्यातपसी। **पात्रं प्रकृष्टं** विद्यादित्रयेण कीर्तितम्। पूर्वमेकदेशेनापि पात्रत्वाभिधानात्। यत्तु "क्षमा दमो दानमित्यादि षोडशगुणं वृत्तम्" इति हारीतेनोक्तं तदत्र न ग्राह्यम्। तत्र तपःस्वाध्याययोरन्तर्भावात् ॥२००॥

[ २०१ श्लो. ] **गोभूरित्यादि**। गवादीन्यर्चितानि। उक्तलक्षणे पात्रे देयानि नापात्रे वक्ष्यमाणदोषभयात्। यत्तु **भविष्यपुराणम्**—

"यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतितादृते। दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत्" ॥

तत् किंचिद्धानेनातिक्रमपरं प्रतिग्रहादिदोषरहितभोजनपरं वा। अत एव **वशिष्ठः** ( ३।९ )—

"यस्य त्वेकगृहे मूर्खो दूरस्थश्च गुणान्वितः। गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः"॥२०१॥

[ २०२ श्लो. ] **विद्येत्यादि। अधो** नरकम् ॥

[ २०३ श्लो. ] **दातव्यमिति**। कुटुंबभरणाबाधे यथाशक्ति दातव्यम्। **निमित्तेषु** उपरागादिषु। श्रद्धा च **देवलेनोक्ता**—"सत्कृतिश्चानसूया च सदा श्रद्धेति कीर्त्यते" ॥२०३॥

[ २०४ श्लो. ] उक्तगोदानप्रक्रियामाह। **हेमेत्यादि**। एतादृग्गौः प्रत्यहं निमित्तविशेषे च दातव्या। कांस्यक्रोडा ॥ २०४ ॥

[ २०५ श्लो. ] फलाभिधाने काम्यतामाह। **दातेत्यादि। भूयश्चा सप्तममिति**। आत्मानं नरकात्तारयित्वा पुनः स्वकुलं सप्तमपुरुषपर्यन्तं तारयति ॥२०५॥

[ २०६ श्लो. ] **सवत्सेत्यादि। उभयतोमुखीं** गां कपिलां दद्दाता वत्ससहिता गवी रोमतुल्यानि युगानि **स्वर्गमाप्नोति** ॥ २०६ ॥

[ २०७ श्लो. ] उभयतोमुखीलक्षणमाह। **यावदित्यादि। न मुञ्चति** न त्यजति ॥२०७॥

[ २०८ श्लो. ] **यथेत्यादि यथाकथंचिदनलंकृताऽपि। अधेनुं** अप्रसूताम्। **अपरिक्लिष्टाम**नतिदुर्बलाम् ॥ २०८ ॥

[ २०९ श्लो. ] **श्रान्तेत्यादि। संवाहनं** तैलादिना अंगमर्द्दनम्। **परिचर्या** औषधादिना। पादशौचं ब्राह्मणस्य। एतानि उक्तगोदानसमानि। द्रव्याद्युत्कर्षात्फलोत्कर्षः ॥ २०९ ॥

[ २१० श्लो. ] **भूदीपेत्यादि। प्रतिश्रयः** प्रवासिनामाश्रयः। **नैवेशिकं** विवाहार्थं द्रव्यम्। **धुर्यो**ऽनश्वान् ॥ २१० ॥

[ २११ श्लो. ] **गृहेत्यादि। यानं** रथादिकम् ॥ २११ ॥

[ २१२ श्लो. ] **सर्वेत्यादि**। पृक्तगवादि सर्वदानफलं वेददानजन्यफलेभ्यो नाधिकं यतस्ततो वेदाख्यं **ब्रह्म ददद्ब्रह्मण** एव लोकमव्ययमाप्नोति। **अविच्युतं** अनष्टम् ॥ २१२ ॥

[ २१३ श्लो. ] **प्रतीत्यादि। प्रतिग्रहसमर्थोऽपि** विद्यातपोवृत्तैः प्रतिग्रहाधिकार्यपि। **पुष्कलान्** बहून् ॥ २१३ ॥

[२१४ श्लो.] **कुशा** इत्यादि। कुशादिकं दुष्कृतकर्मणो न त्याज्यम्। शय्यादिकमभिधाय **मनुः**—"अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः। अन्यत्र कुलटाषंढपतितेभ्यस्तथा द्विषः" ॥२१४॥

[ २१५ श्लो. ] **देवेत्यादि**। अवश्यकर्त्तव्यार्थं क्षेत्रादिगतमन्नमग्राह्यादपि ग्राह्यम्। **बौधायनः** ( १।५।५५)—

"खले क्षेत्रे च यद्धान्यं कूपादिषु च यज्जलम्। अभोज्यादपि तद् ग्राह्यं यच्च गोष्ठगतं पयः"॥

## अथ श्राद्धप्रकरणम्–१०

[ २१७ श्लो. ] सदैवकश्राद्धकालमाह । **अमावास्येत्यादि** । **अष्टका** आग्रहायण्याया ऊर्ध्वं कृष्णाष्टमी ' ऊर्ध्वमाग्रहायण्यस्तिस्रोऽष्टका ' इति **गृह्यानुसारात्**। **वृद्धिः** पुत्रजन्मादिः। **द्रव्यं** खड्गमांसादिः। **ब्राह्मणसंपत्तिः** पंक्तिपावनादिसंपत्तिः ॥ २१७ ॥

[२१८ श्लो.] **व्यतीपातः** सूर्याचन्द्रमसोः संक्रान्तिसमयः। **गजच्छाया ब्रह्मपुराणोक्ता**— "योगो मघात्रयोदश्यां कुंजरच्छायसंज्ञितः । भवेन्मघायां संस्थे च शशिन्यर्के करे स्थिते "॥इति॥ न च देशः क्लृप्तसंकेतात् शीघ्रमर्थावगतेः। **ग्रहणं** च दृष्टमेव निमित्तम्। सूर्योपरागे तु ' यावद्दर्शनगोचर ' इति **जाबालवचनात्**। **रुचिरिच्छा**। अमावास्याष्टकयोः कृष्णपक्षान्तर्गतत्वेन प्राप्ते नित्यत्वप्रतिपादनार्थम् । विषुवदनयोः सूर्यसंक्रमणान्तर्गतत्वेन सिद्धे पृथगुपादानं फलातिशयार्थं न तु नित्यार्थं **विष्णुना** काम्यत्वेन कीर्त्तनात्। **विष्णुः** (अ.७६।१-२; ७७।१-७)— "अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघी प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशी व्रीहियवपाके च" इति । " एतांस्तु श्राद्धकालान् वै नित्यानाह **प्रजापतिः** । श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते"॥ आदित्यसंक्रमणं विशेषेणायनद्वयम्। विषुवद्द्वयं व्यतीपातः। जन्मर्क्षमभ्युदयश्च।

"एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः । श्राद्धमेतेषु यद्दत्तं तदानंत्याय कल्पते" ॥ अनेनामावास्यादीनां नित्यता। आदित्यसंक्रमणादीनां काम्यतोक्ता। अत्र "अथैत**न्मनुः** श्राद्धं कर्म प्रोवाच प्रजानिःश्रेयसार्थं तत्र पितरो देवता ब्राह्मणाश्चाहवनीयार्थे " **इत्यापस्तंबवचनात्** पितॄनुद्दिश्य द्रव्यत्यागो ब्राह्मणस्वीकारपर्यन्तः श्राद्धम् । अन्यत्र देवश्राद्धादौ श्राद्धशब्दो गौणस्तद्धर्मप्राप्त्यर्थ इति **कल्पतरुः** ॥ **२१८** ॥

[ २१९ श्लो. ] **अग्र्या** इति। **अग्र्याः** श्रेष्ठाः। अध्ययनपारगा इत्यर्थः। **श्रोत्रियश्**छन्दोध्यायी। **ब्रह्मविदात्मज्ञः**। **युवा** नातिबालो नातिवृद्धः। ज्येष्ठसामाख्यः सामवेदभागविशेषस्तद्व्रतं च। तद्योगात् पुरुषोऽपि **ज्येष्ठसामा**। त्रिमधु ऋग्वेदैकदेशस्तद्व्रतं च। तद्योगात् पुरुषोऽपि **त्रिमधुः**। त्रिसुपर्णो बह्वृचवेदैकदेशस्तद्व्रतं च। तद्योगात्पुरुषोऽपि **त्रिसुपर्णः**। एते श्राद्धसंपद इति वक्ष्यमाणेन सम्बन्धः ॥ २१९ ॥

[२२० श्लो.] **ऋत्विगित्यादि**। **तृणाचिकेतो**ऽध्वर्युवेदभागस्तद्व्रतं च। तद्योगात्पुरुषोऽपि। **सम्बन्धी** मातामहादिः। **बान्धवो** मातृस्वस्रीयादिः। तृणाचिकेतव्यतिरिक्तानां स्वस्रीयादीनामनुकल्पमाह **मनुः** ( ३।१४७–१४८ )—"अनुकल्पस्त्वयम्" इत्यभिधाय–

"मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम्। दौहित्रं विट्पतिं बन्धूनृत्विग्याज्यौ च भोजयेत्" ॥२२०॥

[२२१ श्लो.] **कर्मेत्यादि**। **कर्म** नित्यनैमित्तिकम्। **तप**श्चान्द्रायणादि। पञ्चाग्नीनाह **हारीतः**— " पचनः पाचनस्त्रेता यस्य पञ्चाग्नयो गृहे । सायं प्रातश्च दीप्यन्ते स विप्रः पंक्तिपावनः " ॥ पचन आवसथ्याग्निः। पाचनः सद्योऽग्निः। अग्न्यादयः श्राद्धस्य संपादकाः ॥ २२१ ॥

[ २२२ श्लो. ] **अवकीर्णी** क्षतव्रतः। **कुण्डाशी** देवलोकचतुःषष्टिपलान्तभोक्ता जारजाताशी वा। **वृषलात्मजः** सवर्णायां पुत्रमनुत्पाद्य शूद्रायामुत्पादितपुत्रः। **कर्मदुष्टा** निषिद्धवाणिज्यादि कर्त्तारः। एते रोग्यादयः श्राद्धनिन्दिताः ॥ २२२ ॥

---

१ अ—ऋत्विक् वेदैक—। २ २२१ श्लोके।

[ **२२५ श्लो.** ] **निमंत्रयीतेत्यादि** । **आत्मवान्** क्रोधाद्यनभिभूतः । **शुचिः** स्नानादिना । **चकारात्** स्वयमपि संयतः । असम्भवे तद्दिने निमंत्रणमुक्तं **मार्कण्डेयपुराणे**–
"निमन्त्रयेत पूर्वेद्युःपूर्वोक्तान् द्विजसत्तमान्। अप्राप्तौ तद्दिने वाऽपि हित्वायोपितप्रसङ्गिनम्" ॥२२५॥

[ **२२६ श्लो.** ] **अपरेत्यादि** । **मत्स्यपुराणम्**—
"प्रातःकालो मुहूर्तांस्त्रीन् संगवस्तावदेव तु । मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णस्ततः परम् ॥
"सायाह्नस्त्रिमुहूर्तः स्यात् श्राद्धं तत्र न कारयेत् । राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु "॥
शुक्लपक्षे पूर्वाह्णे पार्वणश्राद्धमुक्तं **वायुपुराणे**—
"पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम्। एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्" ॥२२६॥

[ **२२७ श्लो.** ] **युग्मेत्यादि** । **परिस्तृते** परिवेष्टिते । **दक्षिणाप्रवणे** दक्षिणादिगवनते । उपवेशयेदिति सम्बन्धः ॥ २२७ ॥

[ **२२८ श्लो.** ] अनेकाभाव आह । **द्वावित्यादि** । **प्राक्** प्राङ्मुखौ । त्रीनित्यर्थे **त्रयः** । छान्दसत्वात् । **उदक्** उत्तरमुखान् । अथवा दैवे एकं पित्र्यादित्रिकस्यैकम् । तथा च **मनुः** ( ३।१२५ ). " द्वौ दैवे त्रीणि वा पित्र्ये एकैकमुभयत्र वा " । **ब्रह्मपुराणे**—
" देशकालधनाभावादेकैकमुभयत्र वा । मातामहानामप्येवं तंत्रं वा ब्राह्मणक्रमः " ॥ २२८ ॥

[ **२२९ श्लो.** ] **पाणीत्यादि** । प्रक्षाल्यतेऽनेनेति **प्रक्षालनं** जलं तत्पाणौ दत्त्वा **विष्टरार्थं** आसनार्थम् ॥ २२९ ॥

[ **२३०–२३५ श्लो.** ] **यवैरित्यादि** । **भाजने** तैजसादिपात्रे 'या दिव्या' इत्यादि। **हस्तेषु** सपवित्रेषु 'सपवित्रेषु हस्तेषु' इति **कात्यायन**वचनात् **याज्ञवल्क्य**स्वरसात् विष्टरादि-दीपदानान्तकाण्डानुशयः । **ब्रह्मपुराण**स्वरसाच्च । **कात्यायने** तु पदार्थानुशयः । अतो विकल्पः । पदार्थानुशये फलभूमा ।

**अपेत्यादि** । अपसव्यं वामेनावृत्य । **आवाह्येत्यादि** । अनुज्ञाग्रहणात् 'पितॄन् आवाहयिष्य' इति प्रश्नोपलभ्यतोऽत्र यवविकिरणम्। आदिना गन्धादिदानम्। विशेषस्तु तिलप्रक्षेपे 'तिलोऽसि' इति मन्त्रः।

**दत्वेत्यादि** । **संस्रवानुदबिंदून्** । **तेषां** पितामहादीनां। पितृपात्रे । **विधानतो** यथावस्थितम्। पितृपात्रं **न्युब्जं** । 'तच्च प्रपितामहपात्रेण पिधाय प्रतिष्ठापयति' इति **शौनक**दर्शनात् प्रपितामहपात्रेण ॥ २३५ ॥

[ **२३६–२३७ श्लो.** ] **अग्नावित्यादि**। पितृयज्ञवत् पिण्डपितृयज्ञांगभूतहोमेतिकर्तव्यतया । **मनुः** ( ३।२१२ ) " अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् " । **कात्यायनः**—
"पित्र्येयः पंक्तिमूर्द्धन्यस्तस्य पाणावनग्निकः । हुत्वा मन्त्रवदन्येषां तूष्णीं मंत्रेषु निःक्षिपेत्" ॥
**हुतेत्यादि** । समाहितः सावधानः । **यमः**—
" अग्नौकरणशेषं च पित्र्येऽपि प्रतिपादयेत् । प्रतिपाद्य पितॄणां तु न दद्याद्वैश्वदेविके " ॥
अपिना दैवे दानं न दद्यादिति क्रमनिषेधपरम् ॥ २३६–२३७ ॥

[ **२३८–२३९ श्लो.** ] **दत्त्वेत्यादि** । आपोशानं दत्त्वा यथासुखं वाच्यमित्यन्वयः । **अपिना** स्वयं वाग्यतः ॥ २३८–२३९ ॥

[ २४० श्लो. ] **अन्नमित्यादि** । **इष्टं** ब्राह्मणानाम् । **हविष्यं** तिलादिसाधितम् । **पवित्राणि** रुद्राध्यायादीनि । **पूर्वजपं** गायत्र्यादि ॥ २४० ॥

[ २४१ श्लो. ] **अन्नमित्यादि** । 'तृप्ताः स्थ' इति प्रश्नः । 'तृप्ताः स्म' इत्युत्तरं दर्शितम् । **शेषं चैवानुमान्य** 'शेषमन्नमप्यस्ति' इति प्रश्नः । 'इष्टेभ्यो यथासुखं विनियुज्यताम्' इत्युत्तरं दर्शितम् । **मनुना** "दर्भेषु विकिरश्च यः" ( ३।२४५ ) इति कुशास्तरणे विकिरणमुक्तम् । **अपश्च** पानार्थं **दद्यात्** ॥ २४१ ॥

[ २४२ श्लो. ] **सर्वैत्यादि** । **आदाय** गृहीत्वा । **पितृयज्ञवत्** स्वशाखाविहितपितृयज्ञोक्तरेखाऽवनेजनकुशास्तरणादिपूर्वकं दद्यात् ॥ २४२ ॥

[ २४३ श्लो. ] **मातेत्यादि** । पितृभ्यः पितामहेभ्यः स्वधोच्यतामिति कुर्यात् । **अक्षय्योदकं** अक्षय्यमस्त्विति मंत्रेण ॥ २४३ ॥

[ २४४ श्लो. ] **दत्त्वेत्यादि** । **स्वधाकारमुदाहरेत्** । स्वधां वाचयिष्ये इति पृच्छेत् । **वाच्यतामिति** ब्राह्मणैरनुज्ञातः प्रकृतेभ्यः पितृभ्य इत्यादि । दक्षिणानन्तरं स्वधावाचनं केषांचिच्छाखिनामिति ॥ २४४ ॥

[ २४५ श्लो. ] **ब्रूयुरित्यादि** । ब्राह्मणा 'अस्तु स्वधा' इति ब्रूयुः । उक्ते ब्राह्मणैः । प्रीयन्तामिति विप्रैरुक्तो दाता वक्ष्यमाणां जपेत् ॥ २४५ ॥

[ २४६–२४७ श्लो. ] **दातार इत्यादि**। अन्नं चेति। "वेदश्चाध्ययनाध्यापनतदर्थबोधतदर्थानुष्ठानैर्वृद्धिमेतु" इत्युक्त्वेत्यादि। आशीः प्रार्थनामुक्त्वा प्रियवचनं चाभिधाय पितृपूर्वं विसर्जयेदिति साधारणं अन्यत्सर्वं देवपूर्वमित्यर्थः ॥ २४६–२४७ ॥

[ २४८ श्लो. ] **यस्मिन्नित्यादि**। **पितृपात्रं तदिति** पूर्वोक्तं स्पष्टार्थम्। पात्रोत्तानविसर्जनयोरन्तरा दक्षिणामाह **कात्यायनः**—"पात्रमुत्तानं कृत्वा यथाशक्ति दक्षिणां दत्त्वा विसर्जयेत्" इति ॥ २४८ ॥

[ २४९ श्लो. ] **प्रदक्षिणमित्यादि** । 'भुञ्जीत पितृसेवितम्' इति न विधिः किं तु नित्योपवासातिरिक्ते परिसंख्याविधिः । अत एव **शंखः**—

"भक्ष्यं भोज्यं तथा पेयं यत्किंचित्पच्यते गृहे। न भोक्तव्यं तत् पितॄणामनिवेद्य कदाचन" ॥

**ब्रह्मचारी** ऋतावपि मैथुनवर्जी ॥ २४९ ॥

[ २५० श्लो. ] सर्वश्राद्धप्रकृतित्वात् पार्वणमभिधाय विकृतिमाह । **एवमित्यादि** । एवमिति पार्वणधर्मातिदेशः। **प्रदक्षिणमुपचारः**। तिलैः क्रिया यवैः कार्या। अपरो विशेषः **कात्यायनादिष्वनुसन्धेयः** ॥ २५० ॥

[ २५१ श्लो. ] **एकोद्दिष्टमिति** । एकवचनेनैवार्घ्यस्यैकत्वे प्राप्ते पुनर्यदेकत्वाभिधानं तत् 'युग्मानाशयेद्विजान्' इत्यादि वचनादनेकब्राह्मणपक्षेऽर्घ्ये नानात्वशंकानिरासार्थम् ॥ २५१ ॥

[ २५२ श्लो. ] **उपेत्यादि** । 'अक्षय्यमस्त्विति' स्थाने 'उपतिष्ठतां' 'वाजे वाज' इति स्थाने 'अभिरम्यताम्' । ते ब्राह्मणाः । **विष्णुः** ( अ. ७३ )—

'एकवन्मंत्रानूहेत एकोद्दिष्टे। अत्र पितरो मादयध्वम्' इत्यादि बहुवचनान्तेषु। 'अत्र पितर्मादयस्व' इति एकवचनोहः कार्यः ॥ २५२ ॥

**[ २५३–२५४ श्लो. ] गन्धोदकेत्यादि।** अर्घ्यपात्रचतुष्टयं कृत्वा पितामहादिपात्रेषु प्रेतपात्रस्थजलस्य भागत्रयं सेचयेत्। सपिण्डीकरणश्राद्धं देवपूर्वं प्रयोजयेत्। "पितॄनेवाशयेत्तत्र पुनः प्रेतं च निर्दिशेत्" इति **शातातपवचनान्मातामहादिनिवृत्तिः।** 'ये समाना' इत्यादिमंत्राभ्यां सेचयेदिति संबन्धः। **शेषमिति** कर्तव्यजातं पार्वणैकोद्दिष्टवदाचरेत्। सपिण्डीकरणस्योभयात्मकत्वात्। **स्त्रिया अपीति।** सपिण्डनमेकोद्दिष्टं च स्त्रिया अपि कर्तव्यम्। **न** वृद्धिश्राद्धं **न** च पार्वणश्राद्धमित्यर्थः। विशेषमाह **हारीतः**

"**स्वेन** भर्त्रा सहैवास्याः सपिण्डीकरणं स्त्रियाः। एकत्वं सा गता यस्माच्चरुमंत्राहुतिव्रतैः॥
"तस्मिन्सति सुताः कुर्युः पितामह्या सहैव तु। तस्यां चैव तु जीवन्त्यां तस्याः श्वश्र्वेति निर्णयः"॥
॥ २५३–५४ ॥

**[ २५५ श्लो. ] अर्वागित्यादि।** वृद्ध्याद्यपकर्षनिमित्तं सपिण्डनं मध्येऽपि कर्तव्यम्। कृते तस्मिन् अंबुघटश्राद्धं वर्षपर्यन्तं कर्तव्यमेव। किं तु प्रेतपदोल्लेखो न कार्यः। **अर्वाक्** पूर्वम्। **शातातपः**—

"अर्वाक् संवत्सराद् वृद्धौ पूर्णे संवत्सरेऽपि वा। ये सपिण्डीकृताः प्रेता न तेषां तु पृथक् क्रिया"॥
प्रेतक्रिया एकोद्दिष्टं प्रेतश्राद्धरूपम्॥ २५५॥

**[२५६ श्लो.]** एकोद्दिष्टश्राद्धकालमाह। **मृताह** इति। मृताहे संवत्सरं यावत्प्रतिमासमेकोद्दिष्टं कार्यम्। **प्रतिसंवत्सरमिति** निरग्निविषयम्। औरसक्षेत्रजव्यतिरिक्तसाग्निदशविधपुत्रविषयः। यथा **जाबालः**—

"औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु। प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुता दश"॥

**मत्स्यपुराणे**—

"यत्र यत्र प्रदातव्यं सपिण्डीकरणात्परम्। पार्वणेन विधानेन देयमग्निमता सदा"॥२५६॥

**[२५७श्लो.]** पिण्डप्रतिपत्तिमाह। **पिण्डांस्त्वित्यादि।** गवादीन् त्रीन् भोजयेत्। **अग्नौ जले वा** निःक्षिपेत्। **सत्सु न मार्जयेत्।** गतेषु विप्रेषु मार्जयेत्। दिनान्तं वा तिष्ठेत्। **वशिष्ठः**–(११।२१)
"श्राद्धे नोद्वासनीयानि उच्छिष्टान्या दिनक्षयात्। श्च्योतंति हि स्वधाहारास्ताः पिबन्सकृतोदकाः"॥२५७

**[ २५८ श्लो. ]** हविर्विशेषेण तृप्तिविशेषमाह। **हविष्येति। हविष्यान्नेन** व्रीहियवादिना। **उरभ्रो** मेषः। **शकुनिर्लवकवर्त्तकादिः। पृषतश्चित्रमृगः॥** २५८॥

**[ २५९ श्लो. ] ऐणेत्यादि। एणः** कृष्णमृगः। **रुरुर्बहुशृंगः।** मासवृद्ध्येति। एकादशमासान् यावदित्यर्थः। स्तुतिरियं। उपादेयाः श्राद्धेऽत्यन्ततृप्त्यर्थं न तु वत्सरं श्राद्धस्याकरणमिति॥२५९॥

**[ २६० श्लो. ] खड्गेत्यादि। खड्गामिषं** गण्डकमांसम्। **महाशल्कः** शल्यक इति **मेधातिथिः।** मत्स्यविशेष इति केचित्। **मुन्यन्नं** नीवारादि। **लौहामिषं** लोहितच्छागमांसं 'छागो वा सर्वलोहित' इति **यमवचनात्। महाशाकं** कालशाकम्। **वार्ध्रीनस** उक्तोऽभि**गमे**—

"त्रिपिबं त्विंद्रियक्षीणं श्वेतं वृद्धमजापतिम्। वार्ध्रीनसं तु तं प्राहुर्याज्ञिकाः पितृकर्मणि॥
"नीलग्रीवो रक्तशिराः श्वेतपक्षो विहंगमः। स वै वार्ध्रीनसः प्रोक्त इत्येषा नैगमी श्रुतिः"॥
जलं पिबतो यस्य कर्णौ जिह्वा च जलं स्पृशति स त्रिभिः पिबतीति त्रिपिबः॥ २६०॥

[ २६१–२६२ श्लो. ] **यद्ददातीत्यादि** । सवाबहुवचनान्तः । संशयः संदेहः । प्रतिपदादौ प्रत्येकं श्राद्धकरणे फलमाह । **कन्यामित्यादि** । **कन्यावेदिनो** विवाहकामाः मुख्यानौरसान् । **द्यूतं** द्यूते जयम् । **द्विशफं** गवादि । **एकशफमश्वादि** ॥ २६१–२६२ ॥

[ २६३ श्लो. ] **ब्रह्मेत्यादि** । **ब्रह्मवर्चस्विनः** श्रुताध्ययनसंपन्नानिति पुत्रविशेषणम् । **कुप्यं** स्वर्णरजतातिरिक्तम् । अमावास्यायां प्रकृतान्सर्वान् प्रतिपदादीः कृष्णपक्षे तिथीः प्राप्य यथासंख्यं फलानि चतुर्दश प्राप्नोति ॥ २६३ ॥

[ २६४ श्लो. ] **प्रतिपदित्यादि** । एतान् कन्यादीन् । अत्र **मरीचिः**—

"विषसर्पश्वापदाहितिर्यग्ब्राह्मणघातिनाम् । चतुर्दश्यां क्रियाः कार्या अन्येषां तु विगर्हिता" ॥

अन्येषां तु विगर्हितेत्यनेन यस्य पितैव शस्त्रेणाहतः तेनापि पितुरेवैकस्य पार्वणं सदैवकं कार्यम्॥२६४॥

[२६५-२६६ श्लो.] नक्षत्रविशेषात्फलमाह। **स्वर्गमित्यादि**। **ओजः** शारीरबलमिन्द्रियबलं च। **प्रवृत्तचक्रतां** अव्यर्थाज्ञताम् । **वीतशोकतां** त्यक्तशोकताम् ।

[ २६७ श्लो. ] **धनमित्यादि** । **संप्रयच्छति** ददाति ।

[ २६८ श्लो. ] **कृत्तिकेत्यादि** । **इमान्** स्वर्गादीन्सप्तविंशतिम् ।

[ २६९ श्लो. ] पित्रादिस्वरूपमाह । **वस्वित्यादि** । **अदितिसुता** आदित्याः । एते त्रयो यथासंख्यं पित्रादयः । **देवलः**–

" प्रेतानुद्दिश्य यत् कर्म क्रियते मानवैरिह । तुष्यन्ति पितरस्तेन न प्रेताः पितरः स्मृताः" ॥

**पैठीनसिः**–"य एव विद्वान् पितॄन् यजते वसवो रुद्राश्चादित्याश्चास्य प्रीता भवन्ति" ॥२६९॥

[ २७० श्लो. ] इदानीं श्राद्धस्तुतिमाह । **आयुरित्यादि** । **पितामहा** वस्वादयः । आयुरादिकं ददति ॥ २७० ॥

## अथ गणपतिकल्पप्रकरणम् ११

[ २७१ श्लो. ] **विनायकेत्यादि** । **विनियोजितः** सृष्टः । **गणानां** पुष्पदन्तादीनाम् ॥२७१॥

[ २७२–२७४ श्लो. ] **तेन** गणेशेन । **उपसृष्टः** उपसर्गगृहीतः । **अत्यर्थं** जलाभ्यन्तरम् । **मुण्डान्** मुण्डिताशिरसः । **काषायवाससः** संन्यास्यादीन् । **क्रव्यादान्** गृध्रादीन् । **व्रजन्तं** गच्छन्तम् । अनुगतमनुगम्यमानमिव ॥ २७४ ॥

[ २७५–२७६ श्लो. ] **तेन** गणेशेन । **राजनन्दनो** राजतनयः । **आचार्यत्वमाचार्यभावत्वम्** । **कृषीवलः** कर्षकः ॥ २७५–२७६ ॥

[ २७७ श्लो. ] **स्नपनं** स्नानम् । वक्ष्यमाणविधिना । **कल्कं** वाटन इति प्रसिद्धम् । **उत्सादितस्य** उद्वर्तितस्य ॥ २७७ ॥

[ २७८ श्लो. ] **सर्वौषधैः**

"मुरामांसीवचाकुष्ठं शैलेयं रजनीद्वयम् । शुंठीचम्पकमुस्तं च सर्वौषधिगणः स्मृतः" ॥ इत्युक्तैः ॥

"व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः । यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः" ॥

इत्युक्तैर्वा । **सर्वगन्धैः** कुंकुमागुरुजातीफलैः । **स्वस्तिवाच्याः** 'स्वस्ति भवन्तो ब्रुवन्तु' इति वाचनीयाः ॥ २७८ ॥

[ २७९ श्लो. ] **अश्वस्थानात्** घोटकस्थानात् ॥

[ २८० श्लो. ] **या** इति । या आपः । तासु क्षिपेदित्यर्थः । **अनडुच्चर्म** बहिर्लोम प्राग्ग्रीवमित्याह **वैजवापः**–“ आर्षभं चर्मोत्तरलोमप्राग्ग्रीवमुपस्तीर्य तैः सम्भारैरुपसिञ्चन्ति ” ॥ २८० ॥

[ २८१-२८३ श्लो. ] **सहस्राक्षमि**त्यादित्रयाणां श्लोकानां एते स्नपनमन्त्रास्त्रय एव प्रतिकलशं पठनीयाः ॥ २८१–२८३ ॥

[ २८४ श्लो.] **स्नातस्य** कृतस्नातस्य । **औदुंबरं** ताम्रम् । **प्रतिगृह्य** धृत्वा ॥ २८४ ॥

[ २८५ श्लो. ] **मितो** गणेशस्य नाम । इत्यादयः कूष्माण्डराजपुत्रपर्यन्ताश्चत्वारो विनायका भवन्ति ॥ २८५ ॥

[ २८६ श्लो. ] **नामभि**र्मितादिनामभिः । स्वाहान्तैर्मन्त्रैर्जुहुयादित्युक्तेन सम्बन्धः । तद्यथा । ‘मिताय स्वाहा’ इत्यादि । ततश्चतुष्पथं गत्वा चतुर्षु पथिषु चतुर्दिक्षु कुशोपरि सूर्पचतुष्टयं स्थापयित्वा वक्ष्यमाणबलीन् नमस्कारान्तैर्मितादिनामभिश्चतुर्थ्यन्तैर्मन्त्ररूपैर्दद्यात् । तद्यथा ‘एष बलिः । ॐ मिताय नमः ’ । इति ॥ २८६ ॥

[ २८७–२९० श्लो. ] श्लोकत्रयेण बलिद्रव्याण्याह । **कृतेत्यादि** । **कृताकृतान्** कण्डिताऽकण्डितान् । **पललौदनं** तिलचूर्णमिश्रितं भक्तम् । **मांसं** पक्वापक्वम् । **पुष्पं चित्रं सुगन्धमि**ति पुष्पविशेषणम् । गौडी पैष्टी माध्वीति **त्रिविधा** । एरंडिका स्रज इति पिष्टकमाला इति केचित् । एवं च **स्रजो** ग्रथितपुष्पाणि । **दध्यन्नं** दधिसहितान्नम् । **विनायकस्य** गणेशस्य पूर्णं यथा स्यात् ॥ २८७–२९० ॥

[ २९१ श्लो. ] **रूपं देहि** सौन्दर्यं देहि । **भगं** ऐश्वर्यादिकम् । **मे** मह्यम् ॥

[ २९२ श्लो. ] **तत** इत्यादि । विनायकोद्देशेन भोजयेत् । **वस्त्रयुग्मं** दाक्षिणारूपम् ॥

[ २९३ श्लो. ] **एवं** क्रमेण **पूज्य** सम्पूज्य । **कर्मणां** दृष्टादृष्टानाम् ॥

[२९४ श्लो.] **आदित्यस्य** सूर्यस्य । **स्वामिनः** कार्त्तिकेयस्य । **तिलकं** सुवर्णतिलकम् ॥२९४॥

## अथ ग्रहशान्तिप्रकरणम् १२

[ २९५ श्लो.] **श्रीकामः** संपत्तिकामः । अत्र उदगयनादिकालो नापेक्षणीयः । यथाह **दक्षः**–
“नैमित्तिकानि काम्यानि निपतन्ति यथा यथा । तथा तथैव कार्याणि न कालस्तु विधीयते” ॥
दुःस्वप्नप्रशमनान्नैमित्तिकानि शान्तिफलत्वात् काम्यानि ॥ २९५ ॥

[ २९६ श्लो. ] ग्रहानाह । **सूर्य** इत्यादि । **महीपुत्रो** मंगलः ॥ २९६ ॥

[ २९७ श्लो. ] ताम्रेत्यादि । **उभौ** बुधबृहस्पती सुवर्णेन कार्यौ । एषामाकारविशेषे स्थापने च **मत्स्यपुराणम्**—

“पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः । सप्ताश्वरथसंस्थश्च द्विभुजः स्यात्सदा **रविः** ॥
“श्वेतः श्वेतांबरधरो दशाश्वः श्वेतभूषणः । गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः **शशी** ॥
“रक्तमाल्यांबरधरः शक्तिशूलगदाधरः । चतुर्भुजो मेषगमो वरदः स्याद्**धरासुतः** ॥
“पीतमाल्यांबरधरः कर्णिकारदलद्युतिः । खड्गचर्मगदापाणिः सिंहस्थो वरदो **बुधः** ॥
“ ‘**देवदैत्यगुरू**’ तद्वत्पीतश्वेतौ चतुर्भुजौ । दण्डिनौ वरदौ कार्यौ साक्षसूत्रकमण्डलू ॥

"इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः । बाणबाणासनधरः कर्तव्योऽर्कसुतः सदा ॥
"करालवदनः खड्गचर्मशूली वरप्रदः । नीलः सिंहासनगतो राहुरत्र प्रशस्यते ॥
"कृतोर्ध्वबाहवः सर्वे गदिनो विकृताननाः । गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ॥
"अंगुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा" ॥
तथा "मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु । पूर्वेण भार्गवं विद्यात्सोमो दक्षिणपूर्वके ॥
"पश्चिमे तु शनिं विद्याद्राहुं दक्षिणपश्चिमे । पश्चिमोत्तरतः केतुं स्थापयेच्छुक्लतण्डुलैः" ॥२९७॥

[ २९८ श्लो. ] **स्वैः** स्वकीयैः। **पटे** तदभावे गोमयलिप्तभूभागे । **यथावर्णं** वर्णमनतिक्रम्य ॥

[ २९९–३०१ श्लो. ] गन्धबली ग्रहवर्णवर्णौ कार्यौ । **गुग्गुलुः** सर्वार्थे सर्वदेवधूपप्रयोजनक इति यावत् । **मंत्रवन्तः** 'सूर्याय स्वाहा' इत्यादि । एवं **आकृष्णेत्यादि** । द्वयमपि सुगमम् ॥

[ ३०२ श्लो. ] **अर्क** इत्यादि । सूर्यादीनां अर्कादयः समिधः स्युः ॥

[ ३०३ श्लो. ] **एकैकेत्यादि । मत्स्यपुराणम्**—
" मंत्रवन्तश्च कर्तव्याश्चरवः प्रतिदैवतम् । हुत्वा तु तांश्चरूनसम्यक् ततो होमं समापयेत् " ॥
क्वचिदेकविंशतिराहुतयः ॥ ३०३ ॥

[ ३०४–३०६ श्लो. ] **क्षीरषाष्टिकं** क्षीरयुक्तषाष्टिकधान्यविशेषान्नम् । **हविर्घृतौदनम्** । **चूर्णं** तिलमिश्रौदनम् । 'शुक्रायाज्यौदनं तिलमिश्रं शनैश्चराय' इति **बह्वृचगुह्यपरिशिष्टवचनात्** । क्वचिदपूपमिति पाठः । **चित्रान्नं** दद्यादिति **मत्स्यपुराणवचनात्** ॥ ३०६ ॥

[३०७श्लो.] **यस्येत्यादि** । यस्य पुरुषस्य यो ग्रहो दुःस्थः स तं ग्रहं पूजयेत् । युष्मदर्चकं यूयमपि पूजयिष्यथ । अभीष्टवरदानेन दुःस्थो यत्नेन सुस्थः स्वल्पेन पूजनीयः । यथा **मत्स्यपुराणम्**–
"यस्तु पीडाकरो नित्यमल्पवित्तोऽपि वा ग्रहः । तं तु यत्नेन संपूज्य शेषानप्यर्चयेन्नरः ॥
"तस्मात्पीडाकरो नित्यं य एव भवति ग्रहः। तमेव पूजयेद्भक्त्या द्वौ वा त्रीन् वा यथाविधि ॥
"एकमप्यर्चयेद्भक्त्या ब्राह्मणं वेदपारगम् । दक्षिणाभिः प्रयत्नेन अनुकूलस्य वित्तवान्" ॥३०७॥

[ ३०८ श्लो. ] **ग्रहेत्यादि । भावाभावावुत्पत्तिविनाशौ । भविष्यपुराणे**–
"अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च। नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः" ॥३०८॥

## अथ राजधर्मप्रकरणम् १३

[ ३०९ श्लो. ] इदानीं सर्वधर्मरक्षाहेतो राज्ञो धर्मानाह । **महोत्साह** इत्यादि । **स्थूललक्षो** दाता । **कृतज्ञ** उपकारज्ञः । **वृद्धसेवकः** त्रैविद्यवृद्धसेवी ॥ ३०९ ॥

[ ३१० श्लो. ] **अदीर्घेत्यादि** । अदीर्घसूत्रोऽचिरक्रियः । **अक्षुद्रो**ऽलघुः । **अपरुषो**ऽकर्कशः । **अव्यसनः** कामक्रोधव्यसनरहितः । व्यसनमाह **मनुः** ( ७।४७–४८ )—
" मृगयाक्षो दिवा स्वप्नः परीवादः स्त्रियो मदः । तौर्यत्रिकं वृथाढ्या च कामजो दशको गणः ॥
"पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थद्रोहणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः"॥
**रहस्यवित्** मित्रोदासीनशत्रूणां गुप्तप्रचारज्ञः॥ ३१० ॥

[ ३११ श्लो. ] **स्वरंध्रगोप्ता** । रन्ध्रं यत्र परे प्रभवंति तस्य गोप्ता । **दण्डनीतिरर्थशास्त्रम्** । **विनीतः** कुशलः । **वार्ता** कृषिवाणिज्यादिः । **त्रयी** इति । वेदास्त्रयस्त्रयी ॥ ३११ ॥

[ ३१२ श्लो. ] सेति । स राजा **मौलान्** पितृपितामहादिक्रमेण सेवकान् । **स्थिरान्** कदाचिदपि नान्यगामिनः । तैः सह राज्यं चिन्तयित्वा अनन्तरं नीतिविदा **विप्रेण** सह स्वयं चिन्तयेत् । **मनुः** ( ७।५४,५८ )–

"मौलान् शास्त्रविदः शूरान् लब्धलक्षान् कुलोद्गतान् । सचिवान् सप्त चाऽष्टौ वा प्रकुर्वीत परीक्षितान् ॥

"सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता । मंत्रयेत्परमं मंत्रं राजा षाड्गुण्यसंयुतम्" ॥३१२॥

[ ३१३ श्लो. ] **पुरोहितमित्यादि** । **दैवज्ञं** ज्योतिर्विदम् । **उदितोदितं** वेदवेदार्थवेत्तारम् । **अथर्वाङ्गिरसे** अभिचारप्रधाने कुशलम् ॥ ३१३ ॥

[ ३१४ श्लो. ] **श्रौतेत्यादि** । **विधिवद्यथाविधानम्** । **यज्ञान्** भूरिदक्षिणान् ॥

[ ३१५ श्लो. ] **भोगः** गृहसुवर्णरजतादिः । यतो ब्राह्मणेभ्यो दत्तोऽक्षयो निधिः ॥ ३१५ ॥

[ ३१६ श्लो. ] **अस्कन्नमिति** । अग्नौ हविर्हुतं कदाचित्स्कन्दति स्रवति । व्यथते शुष्यति । कीटादिदोषेण प्रायश्चित्तीयते । ब्राह्मणमुखे नैतादृशं अतोऽग्निहोत्रात् श्रेष्ठमिदम् । मुखशब्दोऽत्र पाणिपरः । " पाण्यास्यो हि द्विजः स्मृत " इति **स्मृतेः** ( मनुः ४।११७ ) ॥ ३१६ ॥

[ ३१७ श्लो. ] **धर्मेणेत्यादि** । आर्जितुं धर्मेण जेतुमीहेत । जितं यत्नतो रक्षेत् । **वृद्धं** पात्रेभ्यो दद्यात् ॥ ३१७ ॥

[ ३१८ श्लो. ] **दत्वेत्यादि** । **निबन्धं** आयस्थाने प्रतिनियतवस्तुदानम् । **भद्रनृपतिपरिज्ञानाय** नाधार्मिकनृपतिपरिज्ञानार्थम् ॥ ३१८ ॥

[ ३१९ श्लो. ] लेख्यं कीदृशमित्याह । **पटे वेत्यादि** । पटस्यास्थिरत्वात्ताम्रमये पट्टे ॥३१९॥

[ ३२० श्लो. ] **प्रतीत्यादि** । प्रतिगृह्यत इति **प्रतिग्रहो** भूम्यादिः । **परिमाण**मियत्ता । दानफलाच्छेदनफलोपवर्णनम् । **स्वहस्त**मतं मेऽमुकपुत्रस्येति युक्तम् । **काल** उपरागादिः । दानच्छेदादिफल**मादिपुराणे** दर्शितम्—

"षष्टिं वर्षसहस्राणां स्वर्गे तिष्ठति भूमिदः । आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत्" ॥३२०॥

[ ३२१ श्लो. ] **रम्यं** फलपुष्पलतादिरम्यम् । **पशव्यं** पशवे हितम् । **आजीवो** जीविका । **जांगल**मुच्चप्रायम् । **कोषो** धनम् । दुर्गमाह **मनुः** ( ७।७० )—

"धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव च । नृदुर्गं गिरिदुर्गं च समाश्रित्य वसेत्पुरम्" ॥ धन्वा मरुभूमिः ॥

[ ३२२ श्लो. ] **तत्र तत्र** दुर्गादौ ॥ [ ३२३ श्लो. ] **नात** इत्यादि । **परतरः** श्रेष्ठतमः ॥

[ ३२४ श्लो. ] **आहवेषु** युद्धेषु । **अकूटैर्**विषादिग्धकर्णिकातिरिक्तैः ॥

[ ३२५ श्लो. ] **पदेत्यादि** । **भग्नेषु** सैन्येषु अविनिवृत्य युद्धमानानां यावन्ति पदानि तावन्ति सोमयागतुल्यानि । **सुकृतं** पुण्यम् ॥ ३२५ ॥

[ ३२६ श्लो. ] **तवेत्यादि** । **निर्हेतिं** अस्त्रशून्यम् । **आदिना** " तृणखादी परप्रेप्सुरलसः शरणागतः " इत्यादि**देवलोक्ता** ग्राह्याः ॥ ३२६ ॥

[ ३२७ श्लो. ] प्रत्यहं कृत्यमाह । **कृतेत्यादि** । स्वस्त्ययनादिका दैवी । आप्तपुरुषाधिष्ठानं मानुषी । तदुभयरक्षायुक्तः । **व्यवहारान्** विवादपदानि वक्ष्यमाणानि । **हिरण्यं** सुवर्णम् । **व्यापृतानीतं** व्यापृतवद्भिरानीतम् । **पश्येच्चारान्** । अतस्तद्भाषितं शृणुयादित्यर्थः । दूतमाह **मनुः** (७।६४)—

"अनुरक्तःशुचिर्दक्षःस्मृतिमान्देशकालवित् । वपुष्मान्वीतभीर्वाग्मी दूतो राज्ञःप्रशस्यते" ॥३२८॥

[ ३२९ श्लो. ] तत इत्यादि। स्वैरविहारी। अन्तःपुरे भार्यादिभिरेकाकी क्रीडेत ॥ ३२९

[ ३३० श्लो. ] सन्ध्येत्यादि। पठेत्स्वाध्यायमभ्यासार्थम् ॥

[ ३३१ श्लो. ] संविशेदित्यादि। संविशेत् शयीत। तथैव तुर्यघोषेणेत्यर्थः। मनुः (७।२३०)—

"एतद्विधानमातिष्ठेदरोगः पृथिवीपतिः। अस्वस्थः सर्वमेतत्तु भृत्येषु विनिवेशयेत्" ॥३३१॥

[ ३३२ श्लो. ] प्रेषयेदित्यादि। स्वेषु सामन्तादिषु। ऋत्विगादिभिराशीर्भिरभिनन्दितो वक्ष्यमाणं कुर्यात् ॥ ३३२ ॥

[ ३३३ श्लो. ] दद्यादित्यादि। ज्योतिर्विदो दैवज्ञान्। तैः सह दानकालमालोक्य वैद्यान् चिकित्सकान् तैः सह देहक्रममालोक्य गवादिकं ब्राह्मणेभ्यो दद्यात्। नैवेशिकानि विवाहोपयोगीनि कन्यालङ्करणादीनि ॥ ३३३ ॥

[ ३३४ श्लो. ] अजिह्मोऽकुटिलः। क्रोधनः क्रोधकर्ता ॥ ३३४ ॥

[ ३३५ श्लो. ] पुण्यादित्यादि। आदद्यात् गृह्णीयात्। यस्मात् गत्रादिदानेभ्यः ॥ ३३५ ॥

[ ३३६ श्लो. ] चारः पराभिभवकारी। महासाहसिकः हठान्मारकः। आदिना उत्कोचकैश्च। कायस्थै राजसंबंधात् प्रभविष्णुभिः पीड्यमानाः प्रजा रक्षणीयाः। मनुः (७।१२४)—

"राज्ञो हि रक्षाधिकृताः परस्वादायिनः शठाः। भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः"॥३३६॥

[ ३३७ श्लो. ] अरक्ष्येत्यादि। किल्बिषं पापम्। [३३९ श्लो.] उत्कोचः खतीति प्रसिद्धः॥

[३४० श्लो. ] अन्यायेनेत्यादि। यः स्वकोषं स्वधनम्। सबान्धवः सपुत्रः॥

[ ३४१ श्लो. ] प्रजेत्यादि। प्रजापीडनमशास्त्रीयधनदण्डादिना। संतप्यतेऽनेनेति संतापः। पीडनविशेषणम्। हुताशन इव हुताशनोऽधर्मः। कुलं संततिः ॥ ३४१ ॥

[ ३४२ श्लो. ] य एवेति। स्वराष्ट्रप्रतिपालने यथाऽधर्मस्तथा परप्रजापीडनेनाधर्म इति तात्पर्यम्। न तु धर्म एवेति। तं धर्मं कृत्स्नं समस्तम् ॥ ३४२ ॥

[ ३४३ श्लो. ] यस्मिन्नित्यादि। आचारः दाक्षिणात्यानां मातुलकन्यापरिणयनादिः। व्यवहारः करादिग्रहणम्। कुलस्थितिः कुलनियतो धर्मः ॥ ३४३ ॥

[ ३४४ श्लो. ] मन्त्रमिति। अस्य राज्ञः। मनुः (७।१४९)—

"यस्य मन्त्रं न जानन्ति समागम्य पृथग् जनाः। स कृत्स्नां पृथिवीं भुंक्ते कोषहीनोऽपि पार्थिवः"॥

[३४५ श्लो.]अरिरित्यादि। चतुर्दिशं स्वभूम्यन्तरितः शत्रुः। तत्परो मित्रम्। तत्परस्तूदासीनः॥

[ ३४६ श्लो. ] उपेत्यादि। साम प्रीत्या दर्शनहितकथनादि। भेदः परस्पराहितकथनसंहतयोः रूपजल्पविशेषः। दण्डो हठात् प्रसाधनम् ॥ ३४६ ॥

[ ३४७ श्लो. ] सन्धिं चेत्यादि। सन्धिरावाभ्यामन्योन्यस्य नापकर्तव्यमिति नियमः। विग्रहो युद्धम्। यानं शत्रुं प्रति गमनम्। आसनमुपेक्षणम्। संश्रयः प्रबलतरनृपत्यन्तराश्रयणम्। एतानुपकरान् यथार्हं परिकल्पयेत् विभजेत् ॥ ३४७ ॥

[ ३४८ श्लो. ] यदेत्यादि। परः आत्मापेक्षया वाहनादिना हीनः। आत्मा च उत्साहादिना युक्तः। हस्त्यश्वरथपदादिसंपन्नः ॥ ३४८ ॥

[ **३४९ श्लो.** ] **दैवेत्यादि । दैवं** पौर्वदेहिकम् । **पुरुषकारः** ऐहिकपुरुषप्रयत्नः । पौरुषं तपोदानयागादिष्वभिव्यक्तं तेनार्जितमदृष्टमुच्यते । एतयोः **कर्मसिद्धिर्नियता** । तदाह **व्यासः**–

" दैवमात्मकृतं विद्यात् कर्म यत्पौर्वदेहिकम् । स्मृतः पुरुषकारश्च क्रियते यदिहापरम् " ॥

अतः शुभयुक्तं दैवं निश्चित्य प्रयतेत ॥ ३४९ ॥

[ **३५० श्लो.** ] **केचिदित्यादि । स्वभावाद्वस्तुसामर्थ्यात् । कालात्** विशिष्टकालभावात् । **संयोगे**ऽमीषां साहित्ये । तथा च **मत्स्यपुराणम्**—

" दैवं पुरुषकारश्च कालश्च पुरुषोत्तम । त्रयमेतन्मनुष्यस्य पिंडितं स्यात्फलाय वै ॥

" कृषे वृष्टिसमायोगे दृश्यन्ते फलशालयः । वर्षाकाले प्रहृष्यन्ते नैवाकाले कथंचन " ॥३५०॥

[ **३५१ श्लो.** ] दृष्टान्तमाह । **यथेत्यादि । दैवं न सिध्यति** फलं न साधयतीत्यर्थः ॥ **अतो** दैवपुरुषकारद्वयसाध्ये एकतरं तत्र न साधकमिति तात्पर्यम् ।

[ **३५२ श्लो.** ] **हिरण्येत्यादि । वरा** श्रेष्ठा । मित्रमाह **मनुः** ( ७।२१३ )—

" धर्मज्ञं च कृतज्ञं च तुष्टप्रकृति चैव यत् । अनुरक्तं स्थिरारंभं लघु मित्रं प्रशस्यते" ॥३५२॥

[**३५३श्लो.**]**स्वाम्येत्यादि । स्वामी** राजा । **दण्डो** हस्त्यश्वरथपादातम् । **एताः** सप्त **प्रकृतयः** ॥

[ **३५४ श्लो.** ] **तदवाप्य** राज्यमवाप्य । **दुर्वृत्तेषु** स्तेनादिषु ॥

[ **३५५ श्लो.** ] **स** दण्डः । अलुब्धादिना ज्ञातुमशक्यः ॥

[ **३५६ श्लो.** ] **यथाशास्त्रं** शास्त्रानतिक्रमेण होमादिद्वारेण ।

[ **३६० श्लो.** ] **व्यवहारान् कात्यायनोक्तान् । अन्वहं** प्रत्यहम् ॥

[ **३६१ श्लो.** ] **कुलानि** ज्ञातीनाम् । **जातयो** ब्राह्मणादीनाम् । **श्रेणयो** वणिगादीनाम् । **गण** आश्रमिणाम् । **विनीय** दण्डं कृत्वा स्वधर्मे **स्थापयेत्** ॥ ३६१ ॥

[ **३६२–३६३ श्लो.** ] धनदण्डस्य द्रव्यपरिमाणज्ञानाधीनत्वात् परिमाणमाह । **जालेत्यादि । जालो** गवाक्षः । तदन्तःप्रविष्टसूर्यस्य मरीचिषु स्थितं **रजः त्रसरेणुः स्मृतम् । राजसर्षपः** गौरः श्वेतसर्षपः । **कृष्णलः** कूंचि इति ख्यातः । तेन षट्माषकोऽष्टरक्तिक इति लौकिकः ॥

[**३६४श्लो.**]**पलमित्यादि ।** चत्वारः सुवर्णाः **पलम् ।** दण्डगौरवापेक्षया द्विकृष्णलो द्विरक्तिकः॥

[ **३६५ श्लो.** ] **शतेत्यादि ।** रूप्यस्येत्यनुवर्त्तते । ताम्रमयः कर्षप्रमाणपण उच्यते ॥

[ **३६६ श्लो.** ] **साशीत्यादि । पणः** पूर्वोक्तः । **उत्तमसाहसाख्यो** दण्ड इत्यर्थः । दोषगौरवापेक्षया च तत्सुवर्णरूप्यपणसहस्रस्यैवोत्तमसाहसत्वेनाभिधानात् । यथा **मनुः** ( ८।१३९ )–

"पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः। मध्यमः पंच विज्ञेयः सहस्रं त्वेव तूत्तमः"॥३६६॥

[ **३६७ श्लो.** ) **धिग्दण्डेत्यादि** । धिग् धिगिति भर्त्सनम् । **वाग्दण्डो** भर्त्सनार्थम् । **वधदण्डः** शारीरः । एतेऽपराधानुरोधेन द्वित्राः **समस्ता** वा योज्याः ॥ ३६७ ॥

[ **३६८ श्लो.** ] **ज्ञात्वेत्यादि । अपराधं** सकृत् कृतमज्ञानकृतं च । **देशं** ग्रामारण्यादिकम् । **कालं** दिवारात्रिसन्ध्यात्मकम् । **बलं** सामर्थ्यम् । **वयो** बाल्यादि । **कर्म** हिंस्रत्वादि । सदाचारश्च । **दण्ड्येषु** दण्डनीयेषु । **ज्ञात्वा** वाग्दण्डादि कुर्यात् ॥ ३६८ ॥

इति **याज्ञवल्क्यटीकायां** प्रथमोऽध्यायः समाप्तः ॥

---

## अथ व्यवहाराध्यायः

**श्रीगणेशाय नमः॥ श्रीलक्ष्मीनारायणाय नमः॥**

[ १ श्लो. ] **व्यवहारानित्यादि**। ऋणादानादिनानाविवादपदविषयसंशयः निराक्रियते अनेनेति नानासंशयहारी विचारो **व्यवहारः**। तथा च **कात्यायनः** ( २६ )—

"वि नानार्थेऽव संदेहे हरणं हार उच्यते। नानासंदेहहरणाद्व्यवहार इति स्मृतः"॥ तान् **व्यवहारान** भूपतिः स्वयं निर्णयेत्। धर्मशास्त्रज्ञैर्ब्राह्मणैः सह। धर्मशास्त्रोक्तभाषोत्तरक्रियानिर्णयानुसारेण न क्रोधद्वेषेण न लोभात् न पक्षपातेन। यद्यपि राजधर्मे 'व्यवहारान् स्वयं पश्येत्' इत्युक्तं तथापि **धर्मशास्त्रानुसारेणे**त्यादिना गुणविधानार्थमयमनुवादः।

[२ श्लो.] इदानीं सभ्यानाह। **श्रुतेत्यादि**। वेदार्थज्ञानवेदाध्ययनसंपन्नाः। **धर्मज्ञा** धर्मशास्त्रज्ञाः। सत्याभिधानशीलाः शत्रौ मित्रे च समभावाः सभ्याः कार्याः। विशेषमाह **कात्ययनः** (५५, ५६)–

"सह सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः। धर्मशास्त्रार्थकुशलैरर्थशास्त्रविचक्षणैः॥

"सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः। ससभ्यप्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः" ॥२॥

[ ३ श्लो. ] स्वयं व्यवहारादर्शनासंभवे त्वाह। **अपश्यतेत्यादि**। देशकालजात्यादिसकलधर्माभिज्ञः। योग्यब्राह्मणाभावे क्षत्रियवैश्यावपि नियोक्तव्यौ। यथाह **कात्यायनः** ( ६७ )–

"यदि विप्रो न विद्वान्स्यात् क्षत्रियं तत्र योजयेत्। वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्"॥

तथा च **मनुः** ( ८।२०-२१ )—

"जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः। धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथंचन॥

" यस्य शूद्रस्य कुरुते राज्ञो धर्मविवेचनम्। तस्य सीदति तद्राष्ट्रं पंके गौरिव पश्यतः" ॥३॥

[ ४ श्लो. ] **रागादित्यादि**। रागादिना ये सभ्याः स्मृत्युक्तार्दन्यथावादिनः सभ्या हीनवाद्युक्तदंडात् द्विगुणं दंडं प्रत्येकं दंडनीयाः। **आदिना** व्यवहारापेतस्य ग्रहणम्॥ ४॥

[ ५ श्लो. ] **स्मृत्येत्यादि**। स्मृतिसदाचारबाहिर्भूतेन वर्त्मना परेणानुगतः। अर्थतः शरीरतो वाँ पीडितः सन्निवेदयेत्तद्व्यवहारदशर्नस्थानम्। तदष्टादशै चेत्याह **मनुः** (८।४—७)—

" तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः। संभूय च समुत्थानं दत्तस्यानपकर्म च॥

" वेतनस्यैव चादानं संविदश्च व्यतिक्रमः। क्रयविक्रयानुशयो विवादः स्वामिपालयोः॥

"सीमाविवादधर्मश्च पारुष्ये दंडवाचिके। स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च॥

"स्त्रीपुंधर्मो विभागश्च द्यूतमाव्हयमेव च। पदान्यष्टादशैतानि व्यवहारस्थिताविह" ॥ इति।

**आवेदयति चे**दित्यनेन स्वयंविवादोत्थापनं न कार्यम्। विशेषमाह **बृहस्पतिः**—

"गुरुशिष्यौ पितापुत्रौ दंपती स्वामिभृत्यकौ। एतेषां समवेतानां व्यवहारो न सिध्यति" ॥५॥

[ ६ श्लो. ] चतुष्पाद्व्यवहारोऽयमिति वक्ष्यति। तस्य प्रथमं भाषापादमाह।

**प्रत्यर्थिन** इत्यादि। ज्ञातभाषार्थस्यैव उत्तरदानसंभवात्। अतः प्रत्यर्थिसमीपे भाषा लिखनीया। **आदिना** द्रव्यसंख्यादिर्ग्राह्यः। अर्थिनश्च भाषादानमित्युक्तम्। भाषया समामासादयो लेख्याः।

---

१ आचारे ३६० श्लो०। २ अ–प्रज्ञायुक्तैः। ३ अ–विशारदैः। ४ अ–धर्मे। ५ अ–धर्मज्ञः। ६ अ–विप्रा। ७अ–दा। ८ ब–एतैर। ९ब–अपिशब्दात्। १०अ–यद्राजानं निवेदयति तद्व्यवहारपदं तत्स्थानम्। ११अ–विध।

जात्यादीत्यादिग्रहणात् " सांध्यं समानद्रव्यं च संख्या नाम तथात्मनः " इति **स्मृत्यंतरोक्ता** ग्राह्याः । अर्थित्वमेवं कस्येत्याह **नारदः**--

"यस्य चाप्यधिका पीडा कार्यं वाऽप्याधिकं भवेत् । तस्यार्थिवादो दातव्यो न यः पूर्वं निवेदयेत्"॥

भाषास्वरूपमाह **बृहस्पतिः** ( ३।५-६ )—

" प्रतिज्ञादोषनिर्मुक्तं साध्यं यत्कारणान्वितम् । निश्चितं लोकसिद्धं च पक्षं पंचविधं विदुः ॥

"अल्पाक्षरः प्रभूतार्थो निःसंदिग्धो निराकुलः । विरोधिकारणैर्मुक्तो विरोधिप्रतिषेधकः " ॥

विशेषमाह **कात्यायनः** ( १३१ )—

"पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत् । पांडुलेखेन फलके ततः पत्रे विशोधितम् "॥

[ ७ श्लो. ] **श्रुतेत्यादि** । श्रुतार्थस्य अधिगतभाषार्थस्य प्रतिवादिन **उत्तरं** भाषावादिसमीपे लेख्यम् । उत्तरकालमाह **कात्यायनः** (१५३)—

"सद्यःकृतेषु कार्येषु सद्य एव विधीयते । कालानीतेषु वा कालं दद्यात्प्रत्यर्थिने प्रभुः " ॥

उत्तरस्वरूपं तद्भेदानाह **नारदः**—

" पक्षस्य व्यापकं सारमसंदिग्धमनाकुलम् । अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः " । व्यापकमाच्छादकम् ।

"मिथ्या संप्रतिपत्तिश्च प्रत्यवस्कंदनं तथा । प्राङ्न्यायश्चोत्तराः प्रोक्ताश्चत्वारः सारवेदिभिः ॥

"अभियुक्तोऽभियोगस्य यदि कुर्यादपन्हवम् । मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः" ॥

यदाह **बृहस्पतिः**–

"श्रुत्वाऽभियोगं प्रत्यर्थी यदि तं प्रतिपद्यते । सा तु संप्रतिपत्तिः स्याच्छास्त्रविद्भिरुदाहृता ॥

"अर्थिनाऽभिहितो योऽर्थः प्रत्यर्थी यदि तं तथा । प्रपद्य कारणं ब्रूयात् प्रत्यवस्कंदनं हि तत् ॥

"आचारेणावसन्नोऽपि पुनर्लेखयते यदि । सोऽभिधेयो जितः पूर्वं प्राङ्न्यायः स उच्यते" ॥

उत्तरलिखनानंतरं सिध्यर्थं यततेति **बृहस्पतिः** ( ५।११-१२ )—

"पूर्वोत्तरेऽभिलिखिते प्रक्रांते कार्यनिर्णये । द्वयोस्तु तप्तयोः संधिः स्यादयःपिंडयोरिव ॥

"साक्षिसत्ये विकल्पस्तु भवेद्यत्रोभयोरपि । दोलायमानौ तत्संधिं कुर्यातां तौ विचक्षणौ " ॥

संध्यभावे **ततोऽर्थीति** अर्थिशब्देन द्वयोरपि स्वपक्षान्वितत्वात् ग्रहणम् । सद्यस्तत्क्षणं न कालांतरे । तदनंतरं **अर्थी** प्रतिज्ञातार्थस्य ग्रहीततत्वादेः **साधनं** प्रमाणं साक्षिपत्रादिकं लेखयेत् । न तु कालांतरे ॥ ७ ॥

[ ८ श्लो.] **तत्सिद्धौ** उक्तप्रमाणस्य सत्यत्वनिर्णये सति **सिद्धिं** जयं प्राप्नोति । अतोऽन्यथात्वे **विपरीतं** पराजयमित्यर्थः । तथा **नारदः** (१।६)—

" सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता । तद्धीनो हीयते वादी तरंस्तामुत्तरो भवेत् " ॥

उत्तरो विजयी । 'प्रत्यर्थिनोऽग्रत' इत्यादिना भाषोत्तरप्रमाणजयपराजयफलनिर्णयरूपपाद-चतुष्टयात्मा व्यवहार उक्तः । तथा **बृहस्पतिः** ( ३।२-३)—

"पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरः स्मृतः । क्रियापादस्तथा चान्यश्चतुर्थो निर्णयः स्मृतः ॥

---

१ कात्यायनः ११५ । २ ब–त्वात्तेन । ३ अ–पक्षविदो । ४ अ–थ । ५ ब–सत्यलक्षणं । ६ अ–सिद्धौ ।

"मिथ्योक्तौ च चतुष्पात्स्यात् प्रत्यवस्कंदने ततः। प्राङ्न्याये चैव विज्ञेयो द्विपात्संप्रतिपत्तिषु" ॥
यद्यपि संप्रतिपत्तावपि निर्णयोऽस्ति तथापि क्रिया साध्या न भवतीति द्विपादतोक्ता। अयं उत्तरलेख्यजयपराजयरूपः प्रत्याकलितं[1]मादाय चतुष्पादित्याह **कात्यायनः**—

"पूर्वपक्षश्चो[2]त्तरं च प्रत्याकलितमेव च। क्रियापादश्च तेनायं चतुष्पात्समुदाहृतः" ॥
प्रत्याकलितं चाग्रे वक्ष्यति ॥ ८ ॥

## अथासाधारणव्यवहारमातृकाप्रकरणम् २

[ ९ श्लो. ] **अभीत्यादि**। अभियुक्तः सन्नुत्तरमदत्वा भाषावादिनं वादांतरेण न योजयेत्। युगपदनेकव्यवहारासंभवात्। भाषावाद्यपि **अभियुक्त**मुत्तरवादिनं न वादांतरेणाभियोजयेत्। पूर्वाभियोगपरित्यागेन प्रतिज्ञाहानिप्रसंगात्। उक्तमर्थं न धर्म्यंतरेण विप्रकृतं कुर्यात्। प्रतिज्ञांतरदोषात् ॥९॥

[ १० श्लो. ] अपवादमाह। **कुर्यादित्यादि**। **कलहे** वाक्पारुष्ये। **साहसे** चौर्यादौ शस्त्रादिप्रहारे च। अहमप्यनेनाकृष्टः शस्त्रेण इति च प्रत्यभियोगं कुर्यात्। दंड्योऽयमनपराधे मयि कृतपीडनत्वादिति भाषायां प्रत्यभियोगस्य प्रत्यवस्कंदनोत्तरत्वेन युगपदनेकव्यवहारापत्तिदोषस्याभावात्। **उभयोर्वा**दिप्रतिवादिनोः **प्रतिभूर्लग्नकः समर्थो** नियमक्षमः कार्यनिर्णयपर्यंतं लग्नको ग्राह्यः। लग्नकाभावे विपर्ययतेत्याह **कात्यायनः** (११७)—

"अथ चेत्प्रतिभूर्नास्ति वादयोग्यस्य वादिनः। स रक्षितो दिनस्यांतो दद्याद्दू[3]ताय वेतनम्" ॥
दूतो राजरक्षिपुरुषः ॥ १० ॥

[ ११ श्लो. ] **निन्हवे** धनाद्यपनयने धनग्रहणाभियोगे न गृहीतं मयेत्युत्तरे साक्ष्यादिभिः प्रतिपादितोऽधमर्णो धनमुत्तमर्णे **दद्यात्**। **राज्ञे च तत्समं** दंडं दद्यात्। निन्हुत्य च संप्रतिपत्तावर्धदंडमाह **व्यासः**—

"निन्हुत्य च यथा वादी स्वयं च प्रतिपद्यते। ज्ञेया सा प्रतिपत्तिस्तु तस्यार्धनियमं स्मृतः" ॥
अपरे च दंडविशेषा आशयदोषभावाभावाभ्यां **स्मृत्यंतरे** व्यवस्थेयाः। मिथ्याभियोगदाता अभियोगाद्**द्विगुणं** दंडं राज्ञे दद्यात्। शूद्रे विशेषमाह **नारदः**—
"मिथ्याभियोगिनो ये स्युर्द्विजानां शूद्रयोनयः। तेषां जिव्हां समुत्कृत्य राजा शूले निवेशयेत्"॥११॥

[१२ श्लो.] **साह[4]सं** मनुष्यमारणम्। **गौरत्र** दोह्या वाह्यश्च। **अभिशापो**[5] महापातकादिना[6]। **अत्यये** द्रव्यविनाशे। **स्त्रियां** कुलस्त्रियां चारित्र्यविवादे दास्यां स्वल्पे विवादे। एषु **सद्य एवोत्तरं** दापयेत्। अन्यत्स्मृत्यन्तरे बोध्यम्॥ १२ ॥

[१३-१५ श्लो.] **देशादित्यादि** त्रिश्लोकः। प्रत्याकलितदुष्टलक्षणमाह। **सृक्किणी** ओष्ठप्रांते। **वाक्चक्षुरिति** न परोक्तां वाचं प्रतिवचनेन पूजयति चक्षुश्च परकीयं प्रतिवीक्षणेन **निर्भुजति** कुटिलीकरोति विकृतं गच्छेत्। नाच्छादयितुं क्षम इत्यर्थः। यथा **श्रीरामायणे**—

"आकारश्छा[7]द्यमानोऽपि निग्रहीतुं न शक्यते। बलाद्धि विवृणोत्येव भावमंतर्गतं नृणाम्" ॥
आकारो देहधर्मो मुखप्रसादवैवर्ण्यादिरूपः। मनोविकृतिर्देहकरणविकृत्याऽवगम्यते। एतानि देशा-

---

१ अ–त्तं नीत्वा। २ अ–श्च। ३ अ–मृत्य। ४ अ–साहसमत्र मारणं। ५ ब–योगो। ६ ब–केन। ७ ब–शक्ता।

देशांतरगमनादीनि दुष्टत्वबोधकानि ॥ १३–१५ ॥

[ १६ श्लो. ] हीनलक्षणमाह। **संदिग्धेत्यादि**। संदिग्धमर्थं यदि साधननिरपेक्षो गृह्णीयात्[1]। **निष्पतेत्** अनाख्याय ग्रामांतरं गच्छेत्। प्रश्नार्थ**माहूतः** किंब्रवीषीत्युक्तो न किंचित् वदेत्। एते त्रयो हीनवादिनो दंड्याः। **नारदस्तु** पंचविधमाह (२।३३)—

"अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः। आहूतप्रपलायी च हीनः पंचविधः स्मृतः" ॥

"प्रपलायी त्रिपक्षेण मौनकृत्सप्तभिर्दिनैः। क्रियाद्वेषी च मासेन साक्षिभिन्नस्तु तत्क्षणात्"॥१६॥

[ १७ श्लो. ] **साक्षीत्यादि**। एको ब्रूते ममेयं भूः क्रीतत्वात्। अपरोऽपि ब्रूते ममेयं भूः क्रीतत्वादिति समकारणोत्तरे द्वयोरपि तुल्यरूपसाक्षिसद्भावे भाषावादिनः साक्षिणो ग्राह्याः। न तु पूर्ववादिन इति व्याख्यानं युक्तम्। "आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा" इति अनेन पौनरुक्त्यापत्तेः।

**पूर्वपक्षेधरीभूते** बलवत्कारणोत्तरेण प्रमाणान्वेषणार्हे **उत्तरवादिनः** साक्षिणो ग्राह्याः। साक्षिग्रहणं पत्रादिकमप्युपलक्षयति ॥ १७ ॥

[ १८ श्लो. ] **सपणेत्यादि**। यदि मम पराजयः स्यात्तदा पराजयदंडाधिकदंडत्वेन एतान्[2] पणान् ददामीत्यतिप्रौढ्या यत्र प्रतिवादी[3] प्रतिपद्यते स सपणो विवादः। तत्र पराजितं दंडं स्वयं च कृतं पणं राज्ञे दापयेत्। **धनं** चाभियुक्तं **धनिने** इति ॥ १८ ॥

[ १९ श्लो. ] **छलमित्यादि**। "भूततत्त्वार्थसंबंधं प्रमादाभिहितं छलं" इति (१।१९) **नारद**वचनात्। यदि प्रमाणांतरेण तत्त्वार्थो निश्चितस्तदा प्रागत्यादिना प्रमादोक्तमपरिपूर्णं विहाय निश्चितभूतार्थत्वेन व्यवहारान् समापयेत्। यथा भूतमपि व्यवहारस्थाने अनुपन्यस्तं हानिमुपगच्छति। तथा **नारदः** (१।६४)—

"प्रमादान्नोच्यते यत्तु तद्भूतमपि हीयते। तस्मात् तत्त्वेनैव व्यवहारान् पश्येत।

"किं तु राज्ञा विशेषेण स्वधर्ममभिरक्षता[4]। मनुष्यचित्तवैचित्र्यात् परीक्ष्या साध्वसाधुता" ॥

[ २० श्लो. ] **निन्हुत** इत्यादि। यो लिखितानेकं स्वर्णरजतताम्रादिकमपनयति स एकदेशसुवर्णादौ साक्ष्यादिभिर्विभावितः सर्वान् रजतादीन् दद्यात्। यद्येकदेशविभावनेन वादिनोऽवसादमवगम्य इदमपरमपि मया लेखयितुं विस्मृतमिति ब्रूते स भाषाकाले लिखनकरणार्थे न[5] ग्रहीतव्यः। न राजदंडः ॥ २० ॥

[ २१ श्लो. ] **स्मृत्योरित्यादि**। धर्मशास्त्रयोर्विरोधे उत्सर्गापवादादि**न्यायेन** निर्णेतव्यम्। तथा—"अनागमं तु यद्भुंक्ते पित्रा पूर्वतरैस्त्रिभिः। न तच्छक्यमपाहर्तुं क्रमात् त्रिपुरुषागतम् ॥

"अनागमं तु यद्भुंक्ते बहून्यब्दशतान्यपि। चौरदंडेन तं पापं दंडयेत्पृथिवीपतिः" ॥ इति।

अनयोर्धर्मशास्त्रार्थशास्त्रयोर्विप्रतिपत्तौ अनागमत्रैपुरुषिक[6]भोगेन स्वामित्वप्रतिपादकधर्मशास्त्रं बलवत्। अनागतशतवर्षभोगे **दंडं विधाय धर्म**शास्त्रं बाधते[7]। तथा **नारदः** (१।३९)—

"यत्र विप्रतिपत्तिः स्याद्धर्मशास्त्रार्थशास्त्रयोः। अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत्" ॥२१॥

---

१ अ–राजन्यानिवद्यैव यदि संदिग्धमर्थं गृह्णीयात्। २ अ–इयतः। ३ अ–वादी। ४ अ–अनुतिष्ठता। ५ अ–ग्रहीतव्यः। ६ अ–त्रैपुरुषिकप्रतिपादक। ७ अ–दंडप्रतिपादकमर्थशास्त्रं बाधते।

[**२२ श्लो.**] **प्रमेत्यादि**। इदं त्रयं प्रमाणं ऋणादानादौ लिखितादीनामन्यतमस्याभावे दिव्यानां घटादीनां नवानाम**न्यतमं** प्रमाणं **उच्यते** मुनिभिः। बलाबलमाह **कात्यायनः** (२२३)—
"क्रिया न दैविकी नोक्ता विद्यमानेषु साक्षिषु। लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः"॥
भुक्तेरनुमानरूपत्वात् भुक्तिग्रहणं अनुमानं लक्षयति। अत एव **बृहस्पतिः** (५।१८)—
"साक्षिलेख्यानुमानं च मानुषी त्रिविधा क्रिया। धटाद्या धर्मजाता चेद्दैवी नवविधा स्मृता"॥
किंतु लिखितादिभ्यो बलवत्वार्थं भुक्तिनिर्देशः॥ २२॥

[**२३ श्लो.**] **सर्वेष्वित्यादि**। **सर्वेष्वेव** ऋणादानादिषु उत्तरा ऋणादानादिका क्रिया प्रमाणान्वेषणार्हा। एकमेव द्रव्यमेकस्य ऋणेन दत्तं निक्षिप्तं वा ततो गृहीत्वा पुनरन्यस्य ऋणेन दत्तं निक्षिप्तं वा तत्रोत्तरा बलवती।
आध्यादौ तु पूर्वा प्रमाणान्वेषणार्हा। प्रतिगृह्यत इति **प्रतिग्रहः**॥ २३॥

[**२४ श्लो.**] **पश्यत** इत्यादि। विवादमकुर्वतः समक्षं संप्रीत्या भुज्यमानायाः परेणानाधिकारिणा भूमेर्विंशतिवार्षिकी स्वत्वहानिर्भवति। विंशतिवर्षैर्निर्वृत्ता **विंशतिवार्षिकी**।
विशेषमाह **व्यासः**—
"वर्षाणि विंशतिं यस्य भूर्भुक्ता तु परैरिह। सति राज्ञि समर्थस्य तस्य स्वत्वं न सिध्यति"॥
धनस्य गवादेर्दशवार्षिकी हानिः। तथा **मनुः** (८।१४८)—
"यत्किंचिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी। भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति" ॥२४॥

[**२५श्लो.**] **आधीत्यादि**। उपनिःक्षेपो "वासनस्थमनाख्याय समुद्रं यन्निधीयते" इति **नारदोक्तः**। **जडो** बुद्धिविकलः। **बालो**ऽप्राप्तषोडशवर्षः। **उपनिधिः** प्रीत्या भोगार्थमर्थितः। **स्त्रियो** दास्यादयः। एतैर्विनाऽन्यानि धनानि उक्तभोगकालेन स्वामिनो नश्यंति। एतानि न वा भोक्तुर्भवंति।
अन्यदप्याह **वृद्धबृहस्पतिः** (९।१२)—
"विवाह्य श्रोत्रियैर्भुक्तं राजामात्यैस्तथैव च। सुदीर्घेणापि कालेन न तेषां सिध्यते पुनः"॥
"अशक्तालसरोगार्तबालभीतप्रवासिनाम्। शासनारूढमन्येन भुक्तं भुक्त्या न हीयते"॥
शासनारूढं ताम्रपट्टादिलिखितम्॥ २५॥

[**२६ श्लो.**] **आध्येत्यादि**। अध्यादीनां हर्तारं **धनिने** धनं राजपुरुषो दापयेत्। आध्यादिसमं दंडं राज्ञे दापयेत्। तथाविधदंडदानाशक्तौ अल्पमपि॥ २६॥

[**२७ श्लो.**] **आगेत्यादि**। भूम्यादावागमः पूर्वपुरुषक्रमादागतभोगाद्विना बलवान्। अतः क्रमागतभोग आगमात् बलवान्। तथा **बृहस्पतिः** (९।३२)—
"अनुमानाद्गुरुः साक्षी साक्षिभ्यो लिखितं गुरु। अव्याहता त्रिपुरुषी भुक्तिरेभ्यो गरीयसी"॥
त्रिपुरुषभोगमाह **व्यासः**—
"प्रपितामहेन यद्भुक्तं तत्पुत्रेण विना च तम्। तौ विना तस्य पित्रा च तस्य भोगस्त्रिपौरुषः"॥
**बृहस्पतिः** (९।२३-२४)—
"पिता पितामहो यस्य जीवेच्च प्रपितामहः। त्रयाणां जीवतां भोगो विज्ञेयस्त्वेकपौरुषः"॥

---

१ अ–लिखितादीनि त्रीणि। २ अ–दी। ३ अ–एव। ४ अ–त्या। ५अ–याबत्। ६ अ–यदि। ७अ–सेह। ८अ–अर्पितः। ९अ–मुक्तानि। १०अ–संकलितार्थमाह तत इति। ११अ–ततः। १२ अ–वरः

आगमोऽपि बलवान् भवति यत्र स्वल्पाऽपि भुक्तिर्नास्ति। तथा नारदः (१।७७)—

"विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु। विशेषतः स्थावराणां यन्न भुक्तं न तत् स्थिरम्"॥२७॥

[२८ श्लो.] आगमस्त्वित्यादि। येनागमः साक्षिपत्रादिकं भूम्यादौ लिखितं सोऽन्येनाभियुक्तस्य साक्षिपत्रादेः कूटतामुद्धरेत्। तत्पुत्रपौत्रौ तु नोद्धरेताम्। तत्र भुक्तिरेव कूटतामुद्धरेत्। न तूद्धरेद्दर्शयेदिति व्याख्यानं युक्तम्। एवं तत्सुतादौ केवलभोगस्य प्रामाण्ये त्रैपुरुषिकभोगप्रमाणमिति न स्यात्। यथा बृहस्पतिः (९।२५)—

"आहर्ता शोधयेद्भुक्तिमागमं चापि संसदि। तत्सुतो भुक्तिमेवैकां पौत्रादिषु न किंचन"॥

भुक्तेः शुद्धिरविच्छेदादिरूपा पौत्रादिष्विति पौत्रादिनागमस्य न चाभुक्तेः शुद्धिः कर्तव्येति भावः। आगमभोगौ तु दर्शनीयावेव॥ २८॥

[२९ श्लो.] योऽभीत्यादि। यद्यभियुक्तो मृतः स्यान्नागममुद्धृतवान् तदा तत्पुत्रादिरागममुद्धरेत्। तथा च नारदः (१–९२)—

"तथारूढविवादस्य प्रेतस्य व्यवहारिणः। पुत्रेण सोऽर्थः संशोध्यो न तं भोगो निवर्तयेत्"॥

त्रैपुरुषिकी भुक्तिरागमरहिता प्रमाणमित्याह कात्यायनः (३२७)—

"त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि। लेख्याभावेऽपि तां तत्र चतुर्थः समवाप्नुयात्"॥

यथाविधीति विविनक्ति स एव—

"आगमो दीर्घकालश्च निश्छिद्रोऽन्यरवोज्झितः। प्रत्यर्थिसन्निधानं च पंचांगो भोग इष्यते॥

"आगमेन विशुद्धेन भोगो याति प्रमाणताम्। अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति" ॥२९॥

[३० श्लो.] नृपेणेत्यादि। पूगः समूहः "समूहो वणिगादीनां पूगः स परिकीर्तितः" इति कात्यायनवचनात्। वणिगादीनां विजातीयसमूहः श्रेणिः सजातीयसमूहः कुलं तदवांतरम्। एषु नृपपुरस्कृतेषु व्यवहारदर्शने पूर्वं पूर्वं गुरु बोधव्यम्। एतस्य पुनर्न्याये बलवत् पूगेन दृष्टं श्रेण्या न द्रष्टव्यमित्यर्थः। एतैः साहसन्यायवर्जं द्रष्टव्यमित्याह बृहस्पतिः (९-२८)—

"राज्ञा ये विहिताः सम्यक् कुलश्रेणिगणादयः। साहसन्यायवर्ज्यानि कुर्युः कार्याणि ते नृणाम्"॥३०॥

[३१ श्लो.] बलोपेत्यादि। बलेन छलेन। कृतान् स्त्रीकृतरात्रिकृतगृहमध्यकृतग्रामबहिःकृतान् विक्रयदानादीन् शत्रुकृतांश्च व्यवहारान्वर्जयेत्॥ ३१॥

[३२ श्लो.] मत्तेत्यादि। मद्यादिना मत्तः। वातादिना उन्मत्तः। व्याधितः। द्यूताद्यासक्तः। षोडशवर्षोनवयाः। आदिग्रहणात् अस्वतंत्रदासवृद्धादेर्ग्रहणम्। असंबद्धः पित्रानियुक्तादिव्यतिरिक्तः। एतैः कृतं ऋणादि प्रमाणं न भवति॥ ३२॥

[३३ श्लो.] प्रनष्टेत्यादि। प्रनष्टं हिरण्यादि राज्ञा प्राप्तं स्वामिना लिंगै रूपसंख्यादिभिः संवादितं तस्मै देयम्। विसंवादे तद्धनसमं दंडं दापनीयः॥ ३३॥

[३४ श्लो.] राजेत्यादि। राजा निधिमस्वामिकं चिरनिहितं लब्ध्वा ब्राह्मणेभ्योऽर्धं दद्यात्। विद्वांस्तु ब्राह्मणः सर्वं गृह्णीयात्। न राज्ञे भागं दद्यात्। हेतुमाह। यस्मात्सर्वस्य धनजातस्य प्रभुः। तथा मनुः (१।१००)—

१ अ–अशेषतः। २ अ–कृतं। ३ अ–युक्तः तस्य। ४ अ–समुद्धरेत्। ५ अ–तथा च। ६ अ–दृष्टं। ७ अ–नियुक्तान्यः। ८ अ–बहिः प्राप्तं।

"सर्वस्वं ब्राह्मणस्येदं यत्किंचिज्जगतीगतम्। आनृशंस्याद्ब्राह्मणस्य भुंजते हीतरे जनाः"॥

परनिहितविषयमप्येतत्। यथा भारद्वाजः[1]–

"परेण निहितं लब्ध्वा राजन्युपहरेन्निधिम्। राजगामी निधिः सर्वः सर्वेषां ब्राह्मणादृते"॥३४॥

[३५ श्लो.] इतरेत्यादि। ब्राह्मणेनाविदुषा क्षत्रियादिना च स्वकीयनिधौ लब्धे राजा षष्ठमंशं गृह्णीयात्। मन्वादौ अल्पभागग्रहणमधिगंतृगुणवत्त्वापेक्षया ज्ञेयम्। अस्वकीयनिधौ तु निधिहर्त्रे षष्ठभागं दत्त्वाऽवशिष्टं राजा गृह्णीयात्। यथा वशिष्ठः (३।१३–१४) "प्रज्ञायमानं वित्तं योऽधिगच्छेद्राजा तमुद्धरेत्। अधिगंत्रे षष्ठभागं प्रदाय स तु सर्वशः। ब्राह्मणश्चेदधिगच्छेत् षट्सु कर्मसु वर्तमानस्तदा राजा न हरेत्"। अस्वामिकं ज्ञातस्वामिकं च यदा अनिवेदितं राज्ञा ज्ञातं तदा तद्धनं दंडं च निधिहर्ता दाप्यः। तथा नारदः–

"ब्राह्मणोऽपि निधिं लब्ध्वा क्षिप्रं राज्ञे निवेदयेत्। तेन दत्तं तु भुंजीत स्तेनः स्यादनिवेदयन्"॥३५॥

[३६ श्लो.] देयमिति। चौरहृतं राज्ञा देयं यस्माद्यस्य तद्द्रव्यं तस्य किल्बिषमाप्नोति। अप्राप्य तद्द्रव्यं स्वकोषादेव दद्यात्। यथा विष्णुः (३।४-५)–"चौरापहृतमासाद्य सर्वमेव दद्यात्। अनवाप्य कोषादेव"॥ ३६॥ इति व्यवहारमातृकाप्रकरणम्।

## अथ ऋणादानप्रकरणम् २

[३७ श्लो.] धर्म्यां वृद्धिमाह। अशीत्यादि। बंधकं गृहीत्वा ऋणेन पणशते प्रयुक्ते प्रतिमासमशीतिभागः सपादः पणः एको वृद्धिर्भवति। अन्यथा बंधकरहिते प्रयुक्ते पणस्य देयं त्रयं चतुष्पंचकं ब्राह्मणादिक्रमेण वृद्धिः स्यात्। विशेषमाह व्यासः—

"सबंधे भाग आशीतः षष्टिभागः सलग्नके। निराधारे त्वैकशतं[2] मासलाभ उदाहृतः"॥

वृद्धिभेदमाह बृहस्पतिः (११।५, ६, ७)—

"कायिका कालिका चैव चक्रवृद्धिस्तथाऽपरा। कारिताऽथ शिखावृद्धिर्भोगो लाभस्तथैव च"॥

कायिका दोह्यवाह्यकर्मभूता[3]। कालिका प्रतिमासं या भवेत्।

वृद्धेर्वृद्धिश्चक्रवृद्धिः। ग्राहकेन[4] स्वयंकृता कारिता। शिखावृद्धिः प्रत्यहं या गृह्यते। भोगो गृहादिभाटकम्। लाभः सस्यादिफलम्। बृहस्पतिः (११।११)—

"शिखावृद्धिं कायिकां च भोगं लाभं तथैव च। धनी तावत्समादद्यात् यावन्मूलं न शोधितम्"॥३७॥–

[३८ श्लो.] कांतेति। दुर्गवर्त्मना समुद्रेण च ये वाणिज्यार्थं गच्छन्ति ते बंधकरहिते पणशते दशपणान् विंशतिपणान् यथाक्रमं दद्युः। समूलनाशसंभवादधिकवृद्धिदानम्।

वर्णक्रमाच्छतं द्वित्रिरित्याद्युक्तस्य पक्षस्य पक्षांतरमाह। दद्युर्वेति॥ ३८॥

[३८ अ–श्लो.]

"**वृद्धेर्वृद्धिश्चक्रवृद्धिः प्रतिमासं तु कालिका।**

**इच्छाकृता कारिता स्यात् कायिका कायकर्मणा**"॥

निगदव्याख्यातम्। क्वचित्पुस्तके श्लोकोऽयं न पठ्यते॥ ३८ अ॥

---

१ अ–यथाह नारदः। २ अ–ने। ३ अ—युता। ४ अ—ऋणिकेन।

[ **३९ श्लो.** ] **संततिरि**त्यादि । छागीप्रभृतीनां दास्यादीनां च बंधकत्वेन स्थापितानां वृद्ध्यंतरासंभवे तत्संततिरेव वृद्धिः । तैलादेर्वृद्ध्या प्रयुक्तस्य पुनर्मूलेन सहाष्टगुणैरेव परमा वृद्धिः। लाभोऽधिकं वर्तते । वस्त्रादीनां च यथासंख्यं चतुस्त्रिद्विगुणा परा वृद्धिः ।

यच्च **बृहस्पति**वचनम् (११।१३)—

"हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके । धान्ये चतुर्विधा प्रोक्ता सदवाह्यलवेषु च"॥

तच्चिरकालाचिरकालेन व्याख्येयम् । सदो वृक्षादिफलम् । वाह्यो बलीवर्दादिः । लवो लयत इति लवश्चामरादिः ॥ ३९ ॥

[ **४० श्लो.** ] **प्रपन्नमि**त्यादि । संप्रतिपन्नमर्थमुत्तमर्णं साधयन् अधमर्णो राज्ञे निवेदयति तदा एतत् कथं करोषीति नाभियोज्यः । बलादिना तु साध्यमानोऽधमर्णो यदि राज्ञे निवेदयेत्तदाऽसौ तद्धनमुत्तमर्णस्य दाप्यो **दंडश्च** राज्ञा स्वयं ग्राह्य इति ॥ ४० ॥

[ **४१ श्लो.** ] **गृहीतेत्यादि** । अनेकोत्तमर्णसमवाये ऋणग्रहणानुक्रमेण अधमर्ण ऋणं दाप्यः । ब्राह्मणक्षत्रियादिसमवाये ब्राह्मणस्य पश्चात्कृतमपि दत्वा क्षत्रियादीनामपि दाप्यः ॥४१॥

[ **४२ श्लो.** ] **राज्ञे**त्यादि । योऽधमर्णः सभायां न धारयामीति विप्रतिपद्य पश्चात्संप्रतिपद्यते स साधितधनात् प्रतिशतं दशपणान् राज्ञे दंडार्थं दाप्यः । उत्तमर्णोऽपि प्राप्तार्थो भृत्यर्थं प्रतिशतं पंच पंच पणान् दाप्यः ॥ ४२ ॥

[ **४३ श्लो.** ] **हीने**त्यादि । हीनजातिमुत्तमर्णापेक्षया अपकृष्टजातिमृणशोधनार्थं स्वजात्यनुरूपं कर्म कारयेत् । ब्राह्मणः पुनस्तथाविधः कुटुंबपोषणाविरोधेन यथासंभवं दापनीयः । यथा **मनुः** (८-१५८)—

"कर्मणाऽपि समं कुर्यात् धनिकायाधमर्णिकः । समोपकृष्टजातिस्तु दद्याच्छ्रेयांस्तु तच्छनैः"॥

समानजातिरत्र ब्राह्मणेतरः ॥ ४३ ॥

[**४४ श्लो.**] **दीये**त्यादि । ऋणिकेन दत्तं धनं यो **दीयमानं न गृह्णाति** तन्मध्यस्थस्थापनानन्तरं न वर्धते । तथा च **संवर्तः**—

"न वृद्धिः स्त्रीधने लाभे निक्षेपे च तथा स्थिते । संदिग्धे प्रातिभाव्ये च यदि न स्यात्स्वयंकृता"॥

स्थिते मध्यस्थस्थापिते ॥ ४४॥

[**४५ श्लो.**] **अविभे**त्यादि । एकत्वेन वसद्भिश्च पितृव्यभ्रातृजादिभिः एकेन कुटुंबार्थे यदृणं कृतं तस्मिन् कुटुंबिनि प्रोषिते मृते वा तदृणं रिक्थहारिणस्ते दद्युः । सामान्येन कुटुंबार्थकृतं विभक्तैरपि देयमित्याह **मनुः** ( ८-६७ )—

"ग्रहीता यदि नष्टः स्यात्कुटुंबार्थे कृतव्ययः । दातव्यं बांधवैस्तत्स्यात् प्रविभक्तैरपि स्वतः"॥४५॥

[ **४६ श्लो.** ] **न योषिदि**त्यादि । कुटुंबभरणार्थं विना पुत्रेण पत्या च कृतं ऋणं स्त्री न दद्यात् । पुत्रेण कृतं पिता । स्त्रीकृतं च पतिः । तथा **बृहस्पतिः**—

"ऋणं पुत्रकृतं पित्रा शोध्यं यदनुमोदितम् । सुतस्नेहेन वा कुर्यान्नान्यथा दातुमर्हति" ॥४६॥

---

१ अ—योः । २ ब—सामान्य ।

[ ४७ श्लो. ] सुरेत्यादि । सुरापानेनिमित्तं परपूर्वस्त्रीणां संभोगार्थं द्यूतनिमित्तं दंडसंबंधि घट्टादि देयं तदवशेषं च । घट्टादिभ्यो देयत्वेन पित्राऽङ्गीकृतम् । एतत्पैतृकं मातृकं ऋणं पुत्रो न दद्यात् ॥ ४७ ॥

[ ४८ श्लो. ] न पतिः स्त्रीकृतमित्यस्यापवादमाह । गोपेत्यादि । शैलूषो नटः । वस्त्ररागकर्ता च । गोपादिस्त्रीकृतमृणं पतिर्दद्यात् । यस्मादिति हेतुनिर्देशात् स्त्रीप्रधानत्वात्कैवर्तादेश्च ॥४८॥

[ ४९ श्लो. ] न योषिदित्यस्यापवादमाह । प्रतीत्यादि । प्रतीपन्नं संमतम् । पत्येत्यादि पुत्रमुपलक्षयति । 'भर्त्रा पुत्रेण वा सार्धम्' इति कात्यायनवचनात् । तथा कात्यायनः–

"मर्तुकामेन या भर्त्रा उक्ता देयमृणं त्वया । अप्रपन्नाऽपि सा दाप्या ऋणं पत्याश्रितं स्त्रियाः"॥४९॥

[ ५० श्लो. ] पितरीत्यादि । ऋणग्राहिणि पितरि द्यूतवेश्याद्यासक्ते । वाशब्दात् दुश्चिकित्स्यरोगादिग्रहीते पतिते च पुत्रेण ऋणं देयं तदभावे पौत्रेण विप्रतिपत्तौ साक्ष्यादिप्रतिपादितं देयम् । तथा नारदः (१-२)–"पितर्युपरते पुत्रा ऋणं दद्युर्यथागतम्" । विशेषमाह बृहस्पतिः (११-४९)–

"ऋणमात्मीयवत्पुत्रैर्देयं पित्र्यं विभावितम् । पैतामहं समं देयं न देयं तत्सुतस्य तु" ॥

आत्मीयवत्सवृद्धिकमित्यर्थः । कात्यायनः ( ५४८ )—

"विद्यमाने च रोगार्ते स्वदेशात्प्रोषिते तथा । विंशात्संवत्सराद्देयमृणं पितृकृतं सुतैः" ॥ ५० ॥

[ ५१ श्लो. ] ऋक्थेत्यादि । ऋक्थग्राहः पितृव्यादिः । संबंधवशेन गृहीतधनःसन्नृणं दाप्यः । तथा स्त्रीग्राहोऽपि पुत्रो धनग्रहणयोग्यः अंधादिव्यतिरिक्तः । अप्राप्तपितृद्रव्यो न तु गृहीतपितृधनः । तस्य ऋक्थग्राहेणैव प्राप्तत्वात् ।

पुत्रहीनस्य ऋक्थग्रहणयोग्याः पितृव्यादयः ऋक्थस्त्रीग्राहिपुत्राणां कदा केन देयमित्यत्र नारदः ( १-२३ )–

"धनस्त्रीहारिपुत्राणां ऋणभाग्यो धनं हरेत् । पुत्रोऽसतो स्त्रीधनिनोः स्त्रीहारिधनिपुत्रयोः"॥इति । स्त्री च धनं च स्त्रीधनम् । तद्वतोः स्त्रीधनहारिणोरभावे अयोग्यपुत्रेणापि देयं स्त्रीहारिसद्भावे योग्यपुत्रेणापीति व्यवस्था । कात्यायनः ( ५५७, ५७६ )—

" ऋणं प्रदापयेत्पुत्रं यदि स्यान्निरुपद्रवः । द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत्सुतम् ॥

" व्यसनाभिप्लुते पुत्रे बाले वा यत्र दृश्यते । द्रव्यं तु दापयेत्तत्र तस्याभावे पुरंध्रिहृत्" ॥५१॥

[ ५२ श्लो. ] भ्रातृणामित्यादि । ऋज्वर्थम् । प्रातिभाव्यं दानग्रहणम् । नारदः (१३।३९)–

"साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च । विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम्" ॥इति ॥५२॥

[५३ श्लो.] दर्शन इत्यादि । दर्शनादित्रयेण लग्नकत्वं विधीयते । आद्यौ दर्शनप्रत्ययलग्नकौ विसंवादे दाप्यौ । दानलग्नकस्य सुता अपि दाप्याः । तथा बृहस्पतिः (११।३९-४१)–

"दर्शने प्रत्यये दाने ऋणप्रत्यर्पणे तथा । चतुःप्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः ॥

---

१ अ—पानार्थं । २ ब—मनुतं (?) । ३ अ—पैतृकमित्युपलक्षणम् । ४ मातृकमपि । ५ अ–सधनं । ६ अ–अंधादि । ७ अ–अलग्नकस्य । ८ अ–ऋणे द्रव्यार्पणे ।

"आहैकोऽहं दर्शयिष्यामि साधुरे[1]कोऽपरोऽब्रवीत्। दाता त्वयैतद्द्रविणमर्पयाम्यपरोऽब्रवीत्॥
"आद्यौ तु वितथे दाप्यौ तत्कालावेदि[2]तं धनम्। उत्तरौ तु विसंवादे तौ विना तत्सुतौ तथा"॥ ५३॥

[ ५४ श्लो. ] दर्शेत्यादि। दानप्रतिभुवः पुत्रमात्रदेयत्वविधानार्थमिदं इत्यपुनरुक्तिः। तथा कात्यायनः ( ५३१ )—

"प्रातिभाव्यागतं पौत्रैर्दातव्यं न तु तत् क्वचित्। पुत्रेणापि समं देयमृणं सर्वत्र पैतृकम्" ॥५४॥

[ ५५ श्लो. ] वहव इत्यादि। यत्र ऋणे अंशनियमेन अनेके प्रतिभुवो भूतास्तत्र मूलऋणिकाभावे स्वकीयं स्वकीयमंशं ते दद्युः। एकस्य प्रतिभुवः छायां सादृश्यमाश्रितेषु प्रतिभूषु धनिकः स्वेच्छया एकस्मादे[3]वं प्रतिभुवः सर्वधनं गृह्णीयात्॥ ५५॥

[ ५६ श्लो. ] प्रतिभूरित्यादि। यत्र प्रतिभूस्तत्सुतो वा धनिना धनं दापितो राज्ञा तस्य प्रतिभुवः तद्द्विगुणमृणिकै[4]र्देयम्। यावता कालेन तद्द्विगुणं तदाह बृहस्पतिः [ ११।४४ ]—
"प्रातिभाव्यं च यो दद्यात् याचितः प्रतिभावितः। त्रिपक्षात्परतः सोऽर्थं द्विगुणं दातुमर्हति"॥५६॥

[ ५७ श्लो. ] एतस्यापवादमाह। संततेत्यादि। स्त्री च पशुश्च स्त्रीपशू। तद्रूपमृणं स्त्रीपशव्यम्। यत्र दास्यादि छाग्यादिकं च धनिकेन प्रतिभूर्दापितस्तत्र संततिसहितमेव दासीछाग्यादिकमृणि[8]कात् प्रतिभुवा ग्राह्यम्। धान्यादिकं तु यथोक्तं अतोऽन्यद्द्विगुणमेव ॥ ५७॥

[५८ श्लो.] आधिरित्यादि। द्वि[9]गुणे धने भूते यद्यधमर्णेन बंधो न मोक्ष्यते तदा विनश्यति। धनप्रयोक्तुस्तद्भवति। साकृतावधिकालश्चेत्तस्मिन् प्राप्ते विनश्यति। विशेषमाह व्यासः—
"हिरण्ये द्विगुणीभूते पूर्णे काले कृतेऽवधौ। बंधकस्य धनी स्वामी त्रिसप्ताहं प्रतीक्ष्य तु॥
"अतोंऽतरा धनं दत्वा ऋणी बंधकमाप्नुयात्" ॥ ५८॥

[५९श्लो.]गोप्येत्यादि। गोप्याधिर्वस्त्रालंकारादिः। सोपकारे रक्षणीयबंधकस्य वस्त्रालंकारादेर्भोगे सति न वृद्धिः। बलीवर्दादौ च व्यवहाराक्षमत्वं प्रापिते दैवराजव्यतिरेकेण अत्यंतविनाशं गते विनष्टे प्रकृतिं गते तथाविध एव बंधदा[12]त्रे देयः। तथा बृहस्पतिः ( ११–२१ )—
" दैवराजोपघातेन यत्राधिर्नाशमाप्नुयात्। तत्रान्यं दाप्यते बंधं सोदयं वा धनं ऋणी "॥ ५९॥

[ ६० श्लो. ] आधेरित्यादि। आधेः सिद्धिः स्वीकरणेन न भोगेन न वोद्देशमात्रेण। तथा व्यासः—

"आधिश्च द्विविधः प्रोक्तः स्थावरो जंगमस्तथा। सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा"॥६०॥

[ ६१ श्लो. ] चरित्रेत्यादि। चारित्र्यमग्निहोत्रगंगास्नानादि। तदेव बंधकीकृत्य यत् गृहीतं तत्सवृद्धिकं देयम्। अल्पमूल्यं बंधकं 'सत्यमवश्यं मया भोक्तव्यम्' इति कृत्वा यद्दत्तं तत् चिरसमये द्विगुणं देयं न बंधक[13]ग्रहीत्रा विक्रेयमित्यर्थः। चारित्रबंधमिति विश्वरूपस्य पाठः॥ ६१॥

[ ६२ श्लो. ] उपस्थितेत्यादि। आधिविमोचनायोपस्थितस्याधमर्णिकस्य सवृद्धिकं धनं

१ अ–रेषो। २ अ–वदेत्। ३ ब–वेव तद्धनम्। ४ अ–ततः। ५ ब–स्मिन्ने...वि। ६ अ–द्विगुणे कालमाह। ७ अ–पीडितः। ८ ब–प्रा। ९ अ–तद्भवमूलं। १० अ–मूलिकात्। ११ ब–गुणस्येद्धनप्रयोक्तुस्तद्बंधकद्रव्यं भवति क्षेत्रादिस्तं न नश्यति। १२ अ—बंधकल्पनेति शेषः। १३ अ–कं गृहीत्वा।

गृहीत्वा आधिरुत्तमर्णेन मोक्तव्यः । ततोऽन्यथा चोरः स्यात् । बंधकग्राहकेऽ**सति तदीयकुले धनं न्यस्य** स्थापयित्वा आधिं प्राप्नुयात् ॥ ६२ ॥

[ **६३ श्लो.** ] **तत्काले**त्यादि । यदा तु आधिः कथंचिदधमर्णस्य न दत्तः तदा तत्कालमूल्य एवाधिर्ग्राहकस्य गृहे वृद्धिरहितस्तिष्ठेत् । यदा पुनर्धारणको बंधकदाता नास्ति तदा विक्रीय धनं गृहीत्वा राज्ञे दद्यात् ॥ ६३ ॥

[ **६४ श्लो.** ] **यदे**ति । एतदुत्पन्ने द्विगुणे धने प्रविष्टे त्वया ममाधिर्मोक्तव्य इत्युक्त्वा यदाधिर्दीयते तदा तदुत्पन्ने धने द्विगुणे प्रविष्टे स आधिर्मोक्तव्यो न तु भोक्तव्यः ॥ ६४ ॥

**इति ऋणादानप्रकरणम् ।**

## अथ उपनिधिप्रकरणम् ४

[**६५ श्लो.**] **वासने**त्यादि । वासनं निक्षेपाधारभूतं संपुटादि । तत्स्थं तदीयरूपसंख्यादिकमनाभिधाय यत्परस्य हस्ते स्थाप्यते तदौपनिधिकम् । तत्तथैव मुद्रादिचिन्हितं प्रतिदेयम् ॥ ६५ ॥

[ **६६ श्लो.** ] **न दाप्ये**त्यादि । तदौपनिधिकं दैवादिभिरपहृतं न राज्ञा दाप्यः । यदि प्रार्थितेऽदत्ते तस्य **भ्रेषो** विनाशः स्यात्तदा दाप्यः । तत्समं दंडं च स्वयं गृह्णीयात् । यदि निक्षेपस्थापकदोषेण विनष्टस्तदा स एव दद्यात् । यथा **कात्यायनः** ( ५९४ )—

"यस्य दोषेण यत्किंचिद्विनश्येत ह्रियेत वा । तत् द्रव्यं सोदयं दाप्यो दैवराजकृताद्विना" ॥ ६६ ॥

[ **६७ श्लो.** ] **आजीवे**त्यादि । तदौपनिधिकं यदि निक्षेपकस्यासंप्रत्या भुंक्ते तदा तत्समं राज्ञा दंड्यः । तच्च सवृद्धिकं निक्षिप्तुर्दाप्यः ।

**याचितं** मंडनार्थमानीतमाभरणादि । **अन्वाहितं** यदेकस्मिन्निक्षिप्तं तेन पुरुषांतरे निक्षिप्तम् । स्वामित्वं दास्यतीति **न्यासः**—

"चौरराजारातिभयाद्दायादानां च वंचनात् । स्थाप्यतेऽन्यग्रहे द्रव्यं न्यासः स परिकीर्तितः" ॥ इति **बृहस्पत्युक्तः** (१२–२) ।

**निक्षेपश्च**

" स्वं द्रव्यं यत्र विस्रंभान्निःक्षिपत्यविशंकितः । निःक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः " ॥ इति **नारदोक्तः** ( २–१ ) । एतेष्वपि ' न दाप्योऽपहृतम् ' इत्यादिको विधिर्बोद्धव्यः । विशेषमाह **व्यासः**—

"भक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितम् । किंचिन्न्यूनं प्रदाप्यं स्याद्द्रव्यमज्ञाननाशितम्" ॥ ६७ ॥

**इति निक्षेपप्रकरणम् ।**

## अथ साक्षिप्रकरणम् ५

[ **श्लो. ६८** ] **तपे**त्यादि । **ऋजवो**ऽकुटिलाः । एतादृशाः साक्षिणो ज्ञेया इति वक्ष्यमाणेन संबंधः ॥ ६८ ॥

---

१ अ–स ।

[ ६९ श्लो. ] **त्र्यवरे**त्यादि । त्रयोऽवरा निकृष्टा येषां ते **त्र्यवराः** । त्रिभ्योऽन्यूना न भवंतीत्यर्थः । **यथाजातीति** । यो यज्जातीयस्तस्य तज्जातीयः साक्षी । तथाऽस्पृश्यजातीयस्यास्पृश्यजातीयः । अभावे **सर्वे सर्वेषु** मुनिभिः **स्मृताः** साक्षिणः । साक्षी च "समक्षदर्शनात् साक्ष्यं श्रवणाच्चैव सिध्यति " इति ( ८।७४ ) **मनूक्तेः** । एतच्च प्रमाणमात्रोपलक्षणम् । विवादविषयप्रमाणवान् साक्षी भवतीत्यर्थः ॥ ६९ ॥

[ ७० श्लो. ] **स्त्रीबाले**त्यादि । एते स्त्र्यादयः पूर्वोक्तगुणसद्भावेऽपि न कर्तव्याः । **कितवो** द्यूतकारः । **रंगावतारी** रंगोपजीवी ॥ ७० ॥

[ ७१ श्लो. ] **पतिते**त्यादि । **साहसी** अविचारकारी दृष्टदोषः । स्थानांतरे **निर्धूतो** ग्रामनिःसारितः । **आद्यशब्दाः** स्मृत्यंतरोक्ताः श्रोत्रियप्रव्रजितादयो ग्राह्याः ॥ ७१ ॥

[ ७२ श्लो. ] ' त्र्यवराः साक्षिणः ' इत्यस्यापवादमाह । **उभयेति** । धर्मज्ञ एकोऽप्युभयानुमतः साक्षी साक्षिणो विशेषणद्वयोपादानात् । न धर्मज्ञतामात्रेण न वोभयानुमतिमात्रेणैकस्य साक्षित्वम् । एवं च

" शुचिक्रियश्च धर्मज्ञः साक्षी यत्रानुभूतवाक् । प्रमाणमेकोऽपि भवेत्साहसे तु विशेषतः "॥

इति **व्यास**वचनेऽप्युभयानुमतिर्गम्यते । अनुभूतवाक्सत्यत्वेन स्थानांतरे स्त्रीसंग्रहणादिषु पूर्वोक्तसाक्ष्यभावे प्रतिषिद्धोऽपि साक्षी । **नारदः** ( १।१८८ )—

" असाक्षिणो ये निर्दिष्टा दासनैःकृतिकादयः । कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः" ॥

अत्रापि वितथाशेषः ।

"तेषामपि न बालः स्यान्नैको न स्त्री न कूटकृत् । न बांधवो न चारातिर्ब्रूयुस्ते कार्यमन्यथा"॥

ननु " मनुष्यमारणं स्तेयं परदाराभिमर्शनम् । पारुष्यमुभयं चेति साहसं पंचधा स्मृतम्" ॥ इति (१४।२) **नारद**वचनात् साहसग्रहणेनैव संग्रहादीनां प्राप्तत्वात् किमर्थं पृथगुपादानम् । उच्यते । " स्यात् साहसं त्वन्वयवत् प्रसभं कर्म यत्कृतम् " इति (८।३३२) **मनूक्तं** बलकृतसाहसस्यात्र शंकानिरासार्थं पृथग्वचनमिति ॥ ७२ ॥

[ ७३ श्लो. ] **साक्षी**त्यादि । 'श्रावयते' इत्यस्य कर्ता प्राड्विवाकः । 'ये च पापकृताम्' इत्यादि प्राड्विवाको वादिप्रतिवादिसमीपं स्थितान् साक्षिणः श्रावयेत् ॥ ७३ ॥

[ ७४ श्लो. ] **अब्री**त्यादि । एतच्च शूद्रसाक्षिविषयम् । विशेषमाह **मनुः** ( ८।८९ )—

"ब्रूहीति ब्राह्मणं पृच्छेत्सत्यं ब्रूहीति भूमिपम् । गोबीजकांचनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः " ॥

गोबीजेति गवाद्यपहारे यत्पापं तत्तेऽनृताभिधाने स्यात् । पातकैः " ये च पापकृताम् " इत्याद्युक्तपापैः संबध्यसे ॥ ७४ ॥

[७५ श्लो.] साक्षिशपथमाह । **सुकृतमित्यादि** । **तस्य** मृषा जितस्य । एतदपि शूद्रविषयम् । विशेषमाह **मनुः** ( ८।१०२ )

"गोरक्षकान् वाणिजिकान् तथा कारुकुशीलवान् । प्रैष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्"॥

साक्षिविषये शूद्रवत् पृच्छेदित्यर्थः ॥ ७५ ॥

---

१ ब—परो । २ अ—धर्मज्ञेन ।

[७६ श्लो.] **अब्रुवन्नित्यादि**। 'ये च पापकृताम्' इत्यादि श्रावणानंतरं साक्षी पक्षत्रयपर्यंतं साक्ष्यमवदन् राज्ञा दशमांशसहितं वृद्धिसहितमृणं दाप्यः। दशबंधकं च दंडरूपत्वात् स्वयं गृह्णीयात्। विशेषमाह **मनुः** (८।१०९)—

"यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः। रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः" ॥

ऋणादन्यत्राभृते साक्ष्ये दंडविशेषमाह **मनुः** (८।१२१)—

"लोभात्सहस्रं दंड्यः स्यान्मोहात्पूर्वं तु साहसम्। भयाद्वौ मध्यमौ दंड्यौ मैत्र्यात्पूर्वं चतुर्गुणम्॥

"कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम्। अज्ञानाद्वे शते पूर्णे बालिश्याच्छतमेव च ॥

"एतानाहुः कौटसाक्ष्ये प्रोक्ता दंडा मनीषिभिः" ॥ ७६ ॥

[ ७७ श्लो. ] **न ददातीत्यादि**। यः साक्ष्यं जानन्नपि दौरात्म्यान्नोपस्थितो भवति स कूटसाक्षिणां पापैर्दंडेन च समः। कूटसाक्षिणमाह **कात्यायनः** "अवीचीनरके वर्षं वसेयुः कूटसाक्षिहृत्" ॥ ७७ ॥

[ ७८ श्लो. ] **द्वैध** इत्यादि। साक्षिविप्रतिपत्तौ बहूनां वचनं ग्राह्यम्। समसंख्यानां विप्रतिपत्तौ गुणयुक्तानाम्। सर्वेषां तथात्वे गुणातिशयवतां वचो ग्राह्यं निर्णयार्थत्वेन ॥ ७८ ॥

[ ७९ श्लो. ] **सत्यामित्यादि**। यस्य प्रतिज्ञामर्थमाकृतिसंख्यादिसंवादेन सत्यमेतदिति साक्षिणो वदेयुः **स जयी** भवेत्। **अन्यथावादिनो** मिथ्यैतदिति वादिनः। व्यवस्थितः **पराजयः**। "मिथ्यावादी विहीयते" इति **व्यास**वचनात्। तथा **नारदः** (१।२३३)–

"देशकालवयोद्रव्यप्रमाणाकृतिजातिषु। यत्र विप्रतिपत्तिः स्यात् साक्ष्यं तदपि कुत्सितम्" ॥७९॥

[ ८० श्लो. ] **उक्त** इत्यादि। **साक्ष्य उक्ते** संख्याधिका गुणाधिका वा विपरीतमर्थं ब्रूयुस्तदा पूर्वे कूटसाक्षिणः ॥ ८० ॥

[ ८१ श्लो. ] कूटसाक्षिणां दंडमाह। **पृथगित्यादि**। **कूटकृत्**कूटसाक्ष्यकारी क्षत्रियादिः प्रत्येकं **विवादात् द्विगुणं** धनं दंडनीयाः। ब्राह्मणस्त्वक्षतधनो देशान्निःसार्यः। तथा **मनुः** (८।३८०)—

"न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम्। राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम्" ॥

"कौटसाक्ष्यं तु कुर्वाणांस्त्रीन् वर्णान् धार्मिको नृपः। प्रवासयेद्दंडयित्वा ब्राह्मणं तु विवासयेत्"॥

इति ब्राह्मणनिमित्तभेदेन दंडभेदा **मनुनो**क्ताः (८।१२३)। विस्तरभयान्न लिख्यंते। **मनु**वचनं क्षत्रियादीनामभ्यासाविषयम् ॥ ८१ ॥

[ ८२ श्लो. ] **यः साक्ष्यमित्यादि**। **यः** साक्ष्ये अन्येभ्यः श्राविते साक्ष्ये निगदकाले निन्हुते तस्य विवादादष्टगुणो दंडः। **स्पष्टमन्यत्** ॥ ८२ ॥

[ ८३ श्लो. ] सत्यवचनापवादमाह। **वर्णिनामित्यादि**। वर्णिनां ब्राह्मणादीनां चतुर्णां यत्र वधः संभाव्यते तत्र साक्ष्यनृतं वदेत्। तज्जनितपापपरिहाराय सरस्वतीदैवतश्चरुर्निर्वपनीयः। यद्यपि 'न जातु ब्राह्मणं हन्यात्' (८।३८१) इति **मनु**वचनोक्तं तथाऽप्युग्रदंडे राजनि ब्राह्मणहननं संभाव्यते। एतत्प्रमादकरणे ज्ञेयम्। तथा च **गौतमः** (१३।२४)—"नानृतवचने दोषो जीवितं तदधीनं च" इति। न तु पापीयसो जीवनम् ॥ ८३ ॥ **इति साक्षिप्रकरणम्**॥

---

१ अ–दशांशं च दण्डरूपत्वात् स्वयं ग्राह्यः। २ 'सत्यां प्रतिज्ञां यस्योचुः' इति शूलपाण्युद्धृतपाठः। ३ अ–सारणीयः।

## अथ लेख्यप्रकरणम् ६

[८४ श्लो.] यः केत्यादि । **यः** कश्चिदृणादानादिरूपोऽर्थः स्वेच्छया व्यवस्थितः इयता काले इयद्देयमित्यादि तस्मिन्नर्थे साक्षिणो लेख्यं साक्षिनामयुक्तं कार्यम् । तच्च ऋणिकनामलिखनात्पूर्वं लिखितधनिकनामकं कार्यम् ॥ ८४ ॥

[ ८५ श्लो. ] समेत्यादि । गोत्रमेव सगोत्रम् । **सब्रह्मचारिकं** अमुकशाखाध्ययनप्रयुक्तं तल्लेख्यं समादिभिश्चिन्हितं कार्यम् । **आदि**ग्रहणात् द्रव्यजातिसंख्यादीनामपि ॥ ८५ ॥

[ ८६ श्लो. ] ऋज्वर्थः । लिखनानभिज्ञे विशेषमाह **व्यासः**–

"अलिपिज्ञ ऋणी यः स्याल्लेखयेत्स्वमतं तु सः । साक्षी वा साक्षिणोऽन्येन सर्वसाक्षिसमीपतः"॥८६॥

[८७ श्लो.] साक्षीत्यादि । **समाः** समगुणाः । लिखनानभिज्ञास्तु लेखयेयुरिति पूर्वमुक्तम् ॥८७॥

[ ८८ श्लो. ] **उभयाभ्यर्थितेन** उभयानुमतेन । ऋज्वर्थम् ॥ ८८ ॥

[ ८९ श्लो. ] विनेत्यादि । ऋणिकहस्तलिखितं लेख्यमसाक्षिकमपि प्रमाणं यदि बलोपधिकृतं न भवेत् । उपधिश्छद्म । तथा **बृहस्पतिः** ( ८।२३ )–

"मुमूर्षुशिशुभीतार्तैः स्त्रीमत्तव्यसनातुरैः । निशोपधिबलात्कारकृतं लेख्यं न सिध्यति"॥८९॥

[ ९० श्लो. ] **ऋणमित्यादि** । पूर्वोक्तलेख्यकृतमृणं बंधकव्यतिरेकेण त्रिभिः पुरुषैर्देयं न चतुर्थेन । 'पुत्रपौत्रैर्ऋणं देयम्' इति प्राप्ते नियमार्थमिदम् । आधिं गृहीत्वा यदृणं तत्र नायं नियमः । तथा **मनुः** ( ८।११२ )–

"कामिनीषु विवाहेषु गवां भक्ष्ये तथेंधने । ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम्" ॥९०॥

[ ९१ श्लो. ] देशेत्यादि । **उन्मृष्टे** मसीदोषेण । **हृते** चौरादिभि**र्भिन्ने** विदीर्णे **छिन्ने** द्विधाभूते अन्यल्लेख्यमुभयानुमत्या कारयेत् ॥ ९१ ॥

[ ९२ श्लो. ] संदीत्यादि । **युक्तिप्राप्तिरस्मिन्** कालेऽस्मिन् देशे युज्यते अस्य पुरुषस्येदं द्रव्यमित्यादिरूपाक्रियासाक्ष्युपन्यासः । **चिन्हमसाधारणम्** । **संबंधः** दातृग्रहीत्रोः । पूर्वपत्रैरपि ग्रहणादिसंबंधः । **स्वहस्तलिखितादिभिः** संदिग्धं लेख्यं शोधयेत् । **आदि**ग्रहणात्साक्षिलेखकस्वहस्तग्रहणम् । तथा **कात्यायनः** (२८६)—

"ऋणिस्वहस्तसंदेहे जीवतो वा मृतस्य वा । तत्स्वहस्तकृतैरन्यैः पत्रैर्लेख्यस्य निर्णयः" ॥९२॥

[ ९३ श्लो. ] **लेख्यस्येत्यादि** । समग्रऋणशोधनाशक्तौ यावद्धनं ददाति तावद्धनं ऋणी लेख्यपृष्ठेऽभिलेखयेत् । धनी च प्रवेशपत्रं दद्यात् । यथा **विष्णुः** ( ६।२६ )—" असमग्रदाने लेख्यासन्निधाने चोत्तमर्णः स्वलिखितं दद्यात् " ॥ ९३ ॥

[ ९४ श्लो. ] दत्त्वेत्यादि । समग्रशोधने ऋणपत्रं पाटयेत् । पत्रव्यवधाने तु शुध्यर्थमन्यदेव लेख्यं कारयेत् । साक्षिमद्गृहीतं ससाक्षिकमेव दातव्यम् ॥ ९४ ॥ **इति लेख्यप्रकरणम्** ।

---

१ अ–बह्वृचादि । २ क–रिपु । ३ अ–दीयते । ४ अ–धनदाने ।

## अथ दिव्यप्रकरणम् ७

[९५ श्लो.] लेख्याभावे लेख्यादिभिर्निर्णयासंभवे दिव्यमाह । **तुले**त्यादि । **तुलादी**न्येतानि दिव्यानि **महाभियोगेषु** सुवर्णस्तेयादिषु **अभियोक्तरि शीर्षकस्थे इह** शास्त्रे उक्तानि । **शीर्षकं** शिरस्तच्चात्र दिव्यग्राहिणो जये स्वयं दंडांगीकारः । अल्पाभियोगे तु **स्मृत्यंतरो**क्तास्तंडुलादयः शपथाश्च पुत्रशिरस्पर्शादिरूपाः कार्याः । तान्वक्ष्यति **बृहस्पतिः** ( १०।४–५ )—

" घटोऽग्निरुदकं चैव विषं कोषश्च पंचमः । षष्ठश्च तंडुलः प्रोक्तः सप्तमं तप्तमाषकम् ॥
" अष्टमं फालमित्युक्तं नवमं धर्मजं स्मृतम् " ॥ ९५ ॥

[ ९६ श्लो. ] **रुच्ये**त्यादि । अभियुक्तो अभियोक्ता[2] वा स्वेच्छया अन्यतरो दिव्यं कुर्यात् । अपरः शिरो वर्तयेत् । नृपद्रोहमहापातकादौ तु शिरोरहितं[3]मपि दिव्यं कार्यम् । यथा **विष्णुः** ( ९।२२ )—" राजद्रोहे साहसे च विनाऽपि शीर्षवर्तनात् " । **पितामहः**—
"राजभिः शंकितानां च निर्दिष्टानां च दस्युभिः । आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना"॥९६॥

[ ९७ श्लो. ] **सचैले**त्यादि । सूर्योदये पूर्वाह्णे । ऋज्वर्थः । **नारदः**—

" अहोरात्रोषिते स्नाते आर्द्रवाससि मानवे । पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्तितम् " ॥

अनेन सचैलस्नातमित्यार्द्रवासस्त्वपरम्। कैश्चिदेवायं श्लोको न पठ्यते । **विश्वरूपेण** लिखितमेव॥९७॥

[ ९८ श्लो. ] वर्णादिविशेषाद्दिव्यविशेषमाह । **तुले**त्यादि । शूद्रस्य विशेषमाह **नारदः** ( २।३३४-३३५ )—

" ब्राह्मणस्य धटो देयः क्षत्रियस्य हुताशनः । वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु ॥
"साधारणः समस्तानां कोशः प्रोक्तो मनीषिभिः । विषवर्ज्यं ब्राह्मणस्य सर्वेषां वा तुला स्मृता"॥

यत्पुनरनेन ' स्त्रीणां तु न भवेद्[4]दिव्यम् ' इत्यनेन स्त्रीणां दिव्यं निषिद्धं तत्तु नेतरद्विषयम् । महापातकादीनामन्यद्द्वारेण दिव्यमाह **कात्यायनः** (४३१-४३२)–

" मातापितृद्विजगुरुबालस्त्रीराजघातिनाम् । महापातकयुक्तानां नास्तिकानां विशेषतः "॥

इत्यभिधाय

" दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः । एतैरेव नियुक्तानां साधूनां दिव्यमर्हति " ॥९८॥

[९९ श्लो.] **नासे**त्यादि । पणसहस्राभियोगे एव अग्न्यादिका क्रिया । **नृपार्थेषु** नृपद्रोहादिषु महापातकाभियोगेषु च स्नानादिना शुचयो अग्निं वहेयुः । **बृहस्पतिः** (१०।९-१२)—

" विषं सहस्रेऽपहृते पादोने च हुताशनः । त्रिभागोने च सलिलमर्धे देयो घटः सदा ॥
" चतुःशताभियोगे च दातव्यस्तप्तमाषकः । त्रिशते तंडुला देया कोषश्चैव तदर्धके ॥
" शते कृतेऽपह्नुते च दातव्यं धर्मशोधनम् । गोचोरस्य प्रदातव्यं सभ्यैः कालं प्रयत्नतः ॥
"एषा संख्या निकृष्टानां मध्यानां द्विगुणा स्मृता । चतुर्गुणोत्तमानां च कल्पनीया परीक्षकैः" ॥

निकृष्टानां जातिकर्मगुणैः ॥ ९९ ॥

इति **दिव्यमातृकाप्रकरणम्** ॥

---

१ ब–देया । २ ब–योजितो । ३ अ–वर्तनं विनापि । ४ अ–चारभेत् ।

[१०० श्लो.] **तुले**त्यादि। तुलाधारणाभिज्ञैर्वणिगादिभिः पाषाणादिभिः प्रतिमानसमीकृतोऽभिशस्तो येन संनिवेशेन प्रतिमानसमीकरणदशायां सूत्रपातादिभिर्व्यवस्थितः शिक्यं रज्जुश्च तत्पांडुलेख्येनांकयित्वा पिटकादवतारितो वक्ष्यमाणं मंत्रं पठेत्। विशेषमाह **नारदः** (१।२७१-२७२)—

"शिक्यद्वयं समासाद्य धटकर्कटयोर्दृढम्। एकत्र शिक्ये पुरुषमन्यत्र तुलयेच्छिलाम्॥

"धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम्। पिटकं पूरयेत्तस्मिन् इष्टकापांशुलोष्ठकैः"॥इति॥१००॥

[ १०१–१०२ श्लो. ] त्वं **तुले**त्यादि। संशयात्संदेहात्। यदीत्यादि। **अस्मि** भवामि। 'त्वं तुले गमयोर्ध्वं माम्' इत्यंतेन मंत्रेण तुलामभिमंत्रयेदित्यर्थः। अत्र जयपराजयौ ऊर्ध्वाधोगमनलिंगादवगंतव्यौ। तथा **पितामहः**—

"तुलितो यदि वर्धेत शुद्धो भवति धर्मतः। हीयमानो न शुद्धः स्यादेकेषां तु समोऽशुचिः॥

"अल्पपापः समो ज्ञेयो बहुपापस्तु हीयते। धर्मगौरवमाहात्म्यादतिरिक्तो विशुध्यति"॥

एकेषामित्यभिधानात्पुनः परीक्ष्यः। तथा **बृहस्पतिः** ( १०–१९ )—

"धटोऽभियुक्तस्तुलितो हीनश्चेद्धानिमाप्नुयात्। तत्समस्तु पुनस्तुल्यो वर्धितो विजयी भवेत्"॥

**व्यासः**—

"अधोगतिर्न शुध्येत्तु शुध्येदूर्ध्वगतिस्तथा। समोऽपि न विशुद्धः स्यादेषा शुद्धिरुदाहृता॥

"पक्षच्छेदे तुलाभंगे धटकर्कटयोस्तथा। रज्जुच्छेदेऽक्षभंगे वा दद्याच्छुद्धिं पुनर्नृपः"॥

न विशुद्धः स्यादित्यनेन जयो न भवतीयुक्तं न तु पराजयः॥१०१–१०२॥—इति **धटप्रकरणम्**॥

[ १०३ श्लो. ] **अग्निविधि**माह। **करावि**त्यादि। व्रीहिमर्दनेन क्षतयुक्तहस्तो हस्तौ लक्षयित्वा तेषु क्षतस्थानेषु लाक्षाबिंदुभिश्चिन्हं कारयेत्। तथा **नारदः** ( १।३०१ )—

"हस्तक्षतेषु सर्वेषु कुर्याद्धंसपदानि तु। तान्येव पुनरालक्ष्येद्धस्तौ बिंदुविचित्रितौ"॥

ततः करयोरश्वत्थस्यं सप्तपत्राणि दत्वा सप्तभिरेव सूत्रैर्वेष्टयेत्॥१०३॥

[ १०४ श्लो. ] **त्वमि**त्यादि। **पावक** हे पवित्रक। **कवे** इति संबोधनम्। ततो लोहपिंडं तापयित्वा इमं मंत्रं पठेत्॥ १०४॥

[ १०५ श्लो. ] **तस्ये**त्यादि। पंचाशत्पलघटितमष्टांगुललोहपिंडं **समं** कोणरहितं मंत्रयुक्तं च तस्य दिव्यकारिणो हस्ते दापयेत्॥ १०५॥

[ १०६ श्लो. ] **स ताम**ित्यादि। **सो**ऽभिशस्तं लोहपिंडमादाय गोमयकृतसप्तमंडलानि सप्ताधिको गच्छेत्। मंडलं मंडलयोर्मध्यं च षोडशांगुलपरिमाणं ज्ञेयम्॥ १०६॥

[१०७ श्लो.] **मुक्त्वे**त्यादि। 'गत्वा तत्तु तृणे क्षिपेत्' इति **कालिकापुराण**वचनादग्निवर्णं लोहपिंडं तृणचये क्षिप्त्वा मृदितव्रीहिरदग्धश्चेच्छुद्धिमाप्नोति। विशेषमाह **पितामहः**—

"ततस्तद्धस्तयोः पश्येद् व्रीहीन्वा यदि वा यवान्॥

"निर्विशंकेन तेषां तु हस्ताभ्यां मर्दने कृते। निर्विकारे दिनस्यांते शुद्धिं तस्य विनिर्दिशेत्"॥

सप्तमंडलमध्ये तु पतिते दग्धे संदेहे वा पुनर्हरेत्।

कात्यायनः ( ४४१ )—

" प्रस्खलत्यभियुक्तश्चेत्स्थानादन्यत्र दह्यते । न दग्धं तु विदुर्देवास्तस्य भूयोऽपि दापयेत् "॥
प्रस्खलन् मंडलमध्यपतने सति। इति **अग्निविधिः** ।

[१०८ श्लो.] **उदकविधिमाह** । **सत्येत्यादि** । 'हे वरुण सत्येन मामभिरक्षस्व' इति पानीयं शपथं कारयित्वा नाभिपरिमाणजलावस्थितस्य पुरुषांतरस्य ब्राह्मणक्षत्रियवैश्यस्य श्रावयित्वा ऊरू गृहीत्वा स्थिरजले निमज्येत् । **पितामहः**—

"मंडलं पुष्पधूपाभ्यां कारयेत्तु विचक्षणेः । शरान्[1] संपूजयेद्भक्त्या वैणवं च धनुस्तथा" ॥१०८॥

[१०९ श्लो.] **समेत्यादि** । इषुमोक्षणसमकालं वेगातिशयवान्नरः तदिष्वानयनार्थं गतस्तस्मिन् गते पुनरन्यस्तथाविधो मज्जनसमकालं मध्यमं शरमादायागत्य यदि दिव्यकारिणं निमग्नांगं पश्यति तदा राजा तस्य शुद्धिमादिशेत् । **बृहस्पतिः**—

"मध्यमं शरमादाय पुरुषोऽन्यस्तथाविधः । प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः ॥

"आगतस्तंच्छरग्राही न पश्यति यदा जले । अंतर्जलगतं सम्यक् तदा शुद्धिं विनिर्दिशेत् ॥

" अन्यथा न विशुद्धः स्यादेकांगस्यापि दर्शनात् " ॥ **पितामहः**—

"क्षेप्ता तु क्षत्रियः कार्यः सद्वृत्तो ब्राह्मणोऽपि वा । अक्रूरहृदयः शांतः सोपवासस्तथा शुचिः" ॥१०९॥

**इत्युदकविधिः** ॥

[ ११०–१११ श्लो. ] **विषविधिमाह**

**"विष त्वं ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम् । पापेषु दर्शयात्मानं शुभानाममृतं भव ॥११०॥**

**'एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् । यस्य वेगैर्विना जीर्णं स शुद्धः स्यान्न संशयः'॥**

**शार्ङ्गलक्षणमाह कात्यायनः**—

" अजाशृंगनिभं श्यामं सुशीतं शृङ्गसंभवम्[2] । भंगे च शृंगवेराभं ख्यातं तच्छार्ङ्गिं[3] विषम् " ॥
विषं हस्ते कृत्वा ' विष त्वम् ' इत्यभिमंत्र्य भुक्तमुक्तपरिमाणं मूर्च्छादिभिर्विना जीर्णं यस्य स शुद्धः । क्वचित्पुस्तके

" विष त्वं ब्रह्मणः पुत्रः सत्यधर्मव्यवस्थितः । त्रायस्वात्मादभीशापात्सत्येन भव मेऽमृतम् "॥
इति पठेत् ॥ ११०–१११ ॥ इति **विषविधिः** ॥ **कोषविधिमाह** ।

[११२ श्लो.] **देवानित्यादि** । देवानुग्रान् समभ्यर्च्य तदीयस्नानोदकमानीय स्वकीयं पापं देवताभिमुखः श्रावयित्वा तस्मादुदकात् प्रसृतित्रयं ब्राह्मणः पाय तत्स्नानोदकमाहरेत् ॥

**संश्राव्येति** । प्रचंडान् देवानभ्यर्चयेत् । विशेषमाह **पितामहः**—

"भक्तो यो यस्य देवस्य पाययेत्तेन तं नरम् । तदभावे तु देवानां आदित्यस्य तु पाययेत्" ॥११२॥

[ ११३ श्लो. ] **अर्वागित्यादि** । **व्यसन**माघातम् । **घोर**मतिपीडाकरम् । स्पष्टमन्यत् ।

**पितामहः**—

" त्रिरात्रात्सप्तरात्राद्वा द्विसप्ताहादथापि वा । वैकृतं यस्य दृश्येत पापकृत्स तु मानवः " ॥

---

१ अ–श्व शर । २ ब–हिमाचलसमुद्भवम् । ३ ब–सुशीतं तदनुत्तमम् ।

**कात्यायनः** (४५६--४५८)—

" अथ देवविसंवादं त्रिसप्ताहं तु दापयेत्। अभियुक्तं प्रयत्नेन तमर्थं दंडमेव च ॥

" तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत्। रोगोऽग्निर्ज्ञातिमरणं ऋणं दाप्यो दमं च सः॥

" ज्वरातिसारविस्फोटस्थूलास्थिपरिपीडयन्। नेत्ररुक् शूलरोगश्च दैविका व्याधयो नृणाम् "॥

इति **कोषविधिः** ॥

प्रसंगात्तंडुलादीन्युच्यंते ॥ अत्र **पितामहः**—

"चौर्ये तु तंडुला देया नान्यत्रेति विनिश्चयः।

"तंडुलान्कारयेत् शुद्धान् शालेर्नान्यस्य कस्यचित्। मृन्मये भाजने कुर्यादादित्यस्याग्रतः शुचिः॥

" स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत्। प्रभाते कारिणो देया आदित्याभिमुखस्य तु॥

" तंडुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत्रिधा।

"शोणितं द्रवते यस्य दंतजालं च सीदति। गात्रं च कंपते यस्य तमशुद्धं विनिर्दिशेत्" ॥

अथ **तप्तमाषकविधिः** ॥

" कारयेदायसं भांडं ताम्रं वा षोडशांगुलम्। चतुरंगुलमात्रं तु मृन्मयं वाऽपि मंडलम् ॥

" पूरयेत् घृततैलाभ्यां विंशत्या वै पलैस्तु तत्। सुतप्ते निःक्षिपेत्तत्र सुवर्णस्य तु माषकम्॥

" अंगुष्ठांगुलियोगेन तप्तमाषकमुद्धरेत्।

" कराग्रं न धुनेद्यस्तु विस्फोटोऽत्र न जायते। शुद्धो भवति धर्मेण पितामहवचो यथा" ॥

मंडलं वर्तुलम्। अथ **फालविधिः** ॥ तत्र **बृहस्पतिः**—

"आयसं द्वादशपलं घटितं फालमुच्यते। अष्टांगुलं भवेद्दीर्घं चतुरंगुलविस्तृतम्॥

"अग्निवर्णं ततश्चौरो जिव्हया लेहयेत्सकृत्। न दग्धश्चेच्छुद्धिमियात् अन्यथा तु स हीयते" ॥

अथ **धर्मजाविधिः** ॥ तत्र **बृहस्पतिः** (१०।३०—३४)—

" पत्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ। जीवदानादिकैर्मंत्रैर्गायत्र्याद्यैश्च सामभिः ॥

" स्वयं तु पूजयेद्गंधैः कुसुमैश्च सितासितैः। अभ्युक्ष्य पंचगव्येन मृत्पिंडांतरितौ कृतौ ॥

"समौ कृत्वा नवे कुंभे स्थाप्यौ चानुपलक्षितौ ॥

"तत्कुंभस्थं पिंडमेकं प्रगृह्णीताविलक्षितः। धर्मे गृहीते शुद्धः स्यात् अशुद्धश्चान्यथा भवेत्" ॥

इति **धर्मजाविधिः** ॥ **अथ शपथाः** ॥ **नारदः**—

"सत्यं वाहनशस्त्राणि गोबीजकनकानि च। देवतापितृपादाश्च कृतानि सुकृतानि च ॥

"इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणे" ॥ तथा **मनुः** (८।१७३)—

"सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः। गोबीजकांचनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः" ॥

इति **परीक्षाप्रकरणम्** ॥

---

१ अ-स्तना। २ अ-ततः कुंभात्। ३ बृहस्पतिः ( १०-६७ )।

## अथ विभागः ८

[ ११४ श्लो. ] **विभेत्यादि** । पिता यदि स्वार्जितधनस्य विभागं कुर्यात्तदा स्वेच्छया पुत्रान् पृथक् कुर्यात् । न पुत्रेच्छया । यथा **विष्णुः**(१७।१-२)-"पिता चेत्पुत्रान्विभजेत्तस्य स्वेच्छया स्वयमुपात्तेऽर्थे। पैतामहे तु पितापुत्रयोस्तुल्यं स्वामित्वं स्वेच्छया न विभागः" इति । अत्र स्वाम्यं हेतुः । तथा **देवलः**-

" पितर्युपरते पुत्रा विभजेरन्पितुर्धनम् । अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते " ॥ निर्दोषेऽपतिते । क्वचित् पित्रार्जितेऽपि पुत्रेच्छया विभागमाह **नारदः**–

"मातुर्निवृत्ते रजसि दत्तासु भगिनीषु च । निवृत्ते चापि रमणे पितर्युपरतस्पृहे " ॥ रमणान्निवृत्ते रतिशक्तौ निवृत्तायाम् । उपरतस्पृहे गृहस्थाश्रमात् वानप्रस्थ इत्यर्थः ।

**ज्येष्ठं वेति** ज्येष्ठपुत्रमधिकभावेन विभजेत् । तथा वा कुर्याद्यथा **सर्वे समांशिनो** भवेयुः । तथा **नारदः** (१३।३)–

"पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनैः । तेषां स एव धर्मः स्यात्सर्वस्य हि पिता प्रभुः"॥११४॥

[११५ श्लो.] **यदीत्यादि** । यदि पिता स्वेच्छया समांशान् कुर्यात्तदा **पत्न्योऽपि** पुत्रशून्याः समांशिकाः कार्याः । **यासां स्त्रीधनं** भर्त्रादिना **न दत्तं** "दत्ते त्वर्धं प्रकीर्तितम्" इति **वचनात्** दत्ते स्त्रीधने त्वर्धं देयं स्वयं त्वेकपुत्रत्वे भागद्वयं गृह्णीयात् । अनेकपुत्रत्वे न्यूनं भागद्वयम् । यथा **शंखलिखितौ**–"स यद्येकपुत्रः स्याद्द्वावंशावात्मनः कुर्यात्" । एवं च " द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता" इति ( १३–१२ ) **नारदवचनमप्येतत्परमेव** ॥ ११५ ॥

[११६ श्लो.] **शक्तेत्यादि** । विद्यादिना आर्जनक्षमैः साधारणमनिच्छन् किंचित्तंडुलप्रस्थादिकं दत्वा भ्रातृभिः पृथक्कार्यः । उत्तरकालं तत्पुत्रविप्रतिपत्तिनिरासार्थम् ।

पित्रैव तु **न्यूनाधिकविभक्तानां** पितृकृतत्वात्स एव धर्म्यः । न तत्रोत्तरकालं विप्रतिपत्तव्यम् ॥११६॥

[ ११७ श्लो. ] प्रमीतपितृकविभागमाह । **विभेति** । यदा पुत्राः सर्व एव प्रकृष्टगुणा निर्गुणा वा तदा मातापित्रोरुपरतौ पितृधनमृणं च समं कृत्वा विभजेरन् । यच्च 'ज्येष्ठस्य विंश उद्धार' इति (९-११२) **मनुनोक्तं** तदपकृष्टगुणकनिष्ठविषयम् । प्रकृष्टगुणानाम् "उद्धारो न दशस्वस्ति संपन्नानां स्वकर्मसु" इति (९।११५) **तेनैवोद्धारनिषेधात्** । मातुर्धनं ऋणशोधनावशिष्टं दुहितरः समं कृत्वा गृह्णीयुः । विशेषमाह **गौतमः** (२८।२४)—" स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च " । अप्रतिष्ठा विवाहिताऽपि अनपत्या निर्धना अभर्तृका दुर्भगाश्च । ताभ्यो विना । **अन्वयः** पुत्रपौत्रादिः ।

[११८ श्लो.] अविभाज्यधनमाह । **पित्रित्यादि** । पितृद्रव्यानुपघातेन कृष्यादिना यदन्यदर्जितं मैत्रीप्राप्तं विवाहप्राप्तं दायादानां न विभागार्हम् ॥ ११८ ॥

[११९ श्लो.] **क्रमेत्यादि** । पितृपैतामहागतं द्रव्यं पित्रा च अशक्त्या हारितं तद्योऽभ्युद्धरेत् न तद्दायादानामनिच्छन्न **दद्यात्** । तथा विद्यालब्धमपि न दद्यात् ।

---

१ अग्रे. १४८ श्लो. २ अ–वंशावात्मनः कुर्यात् । ३ अ–द्विषय । ४ ब–मस्य ।५ अ–तः । ६ ब–तद्दु । ७ अ–अविवाहिता । ८ ब–दार्जितं । ९ अ–न विभजनीयम् । १० अ–पि । ११ अ–पित्रशक्त्या ।

विद्यालब्धमाह **कात्यायनः** ( ८६७ )—

"परभक्तप्रदानेन प्राप्तविद्यो यदा भवेत् । तया[1] प्राप्तं तु विधिना विद्याप्राप्तं तदुच्यते" ॥११९॥

[ **१२० श्लो.** ] **सामेति** । यदा सामान्यार्थस्य कृषिवाणिज्यादिना वर्धनं भवति तदा समो विभागो न तत्र बहुतरमनेनोपात्तमित्यपेक्षयाऽधिकदानं कर्तव्यम् ।

एतदविद्यानामित्याह **मनुः** ( ९।२०५ )—

" अविद्यानां च सर्वेषामीहातश्चेद्धनं भवेत् । समस्तत्र विभागः स्यादपित्र्य इति धारणा " ॥

इहा कृष्यादि । अपित्र्ये पित्रार्जितभिन्नेषु[2] ।

**अनेकपितृकाणामनेकभ्रातॄणां** ये[3] पुत्रास्तेषां समविषमसंख्याकानामपि पैतामहधने विभज्यमाने यः पितॄणामंशः स एव न पुनः प्रत्येकमंशकल्पना ॥ १२० ॥

[**१२१ श्लो.**] **भूर्येत्यादि** । **निबंधः** आकरादौ[4] राजादिदत्तं नियतद्रव्यम् । **द्रव्यं** सुवर्णादि । एवं भूम्यादिषु पितुः पुत्रस्य च तुल्यं स्वाम्यम् । अतः पुत्रेच्छया विभागोंऽशोऽपि सम एव । तथा **बृहस्पतिः** ( २५।३ )—

"द्रव्ये पितामहोपात्ते स्थावरे जंगमे तथा । सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि" ॥१२१॥

[ **१२२ श्लो.** ] **विभेत्यादि** । यो विभागकाले गर्भो न विज्ञातः पश्चात् स्वजातीयभार्यायां जातः स सर्वेभ्योंऽशहरेभ्यः सकाशादंशं हरेत् । यथा **विष्णुः** (१७।२)—' पितृविभक्तविभागानंतरोत्पन्नस्य भागं दद्युः" । विभागोत्तरगर्भाधाने तु **मनुराह** ( ९।२१६ )—

" ऊर्ध्वं विभागजातस्तु पित्र्यमेव हरेद्धनम् । संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह " ॥

**दृश्याद्वेति** । विभागकालप्राप्तमायव्ययविशोधितं यावदुपलभ्यते ततो वा धनात्स्वांशं लभते॥१२२

[**१२३ श्लो.**] **पित्रित्यादि** । मातापितृभ्यां तस्य पुत्रदुहितृभार्यादिर्यदलंकरणादि दत्तं तत्तस्यैव पित्रुपरमेऽपि न तद्विभजनीयम् ।

पितुर्मरणानंतरं विभागं कुर्वतां पुत्राणां माताऽपि पुत्रांशसमभागं गृह्णीयात् । तथा अपुत्रेत्यनुवृत्तौ **बृहस्पतिः** ( २५–६४ )—" तदभावे तु जननी तनयानां समांशिनी " ॥

विशेषमाह **व्यासः**—

"असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्तिताः।पितामह्यश्च सर्वास्ता मातृतुल्याः प्रकीर्तिताः"॥१२३

[ **१२४ श्लो.** ] **असंस्कृतेत्यादि** । **पूर्वसंस्कृतैः** भ्रातृभिः पितुरूर्ध्वं पैतृकादेव धनात् । **असंस्कृता** भ्रातरो जातकर्मादिसंस्कारैः **संस्कार्याः** । **भगिन्योऽपि** स्वाद्धनात् चतुर्थमंशं दत्वा तेनैव धनेन विवाहसंस्कारेण संस्कार्याः । **बृहस्पतिः** (२५।६४)—"समांशा मातरस्तेषां तुरीयांशाश्च कन्यकाः " इत्यनेन पितृधनानां चतुर्थांशहरत्वमुक्तं तदपि संस्कारार्थमाह ।

चतुर्थांशे विवाहासंभवे तु **देवलः**—

"कन्याभ्यश्च पितृद्रव्याद्देयं वैवाहिकं वसु । अपुत्रस्य[9] तु कन्यायां धर्मजा[10]पुत्रवद्धरेत्" ॥

**स्ववित्तानुसारेणेत्याह विष्णुः**—" अनूढानां कन्यानां स्ववित्तानुसारेण संस्कारं कुर्यात्" ॥१२४॥

---

१ अ–दा । २ अ–वर्जित इत्यादि । ३ अ–वै । ४ अ–राजकरादौ । ५ अ–अत्र पित्रिच्छया न विभागो– । ६ अ–समं । ७ अ–पितेत्यनुवृत्तो । ८ अ–दिना संस्कार्या । ९ अ–अपुत्रकस्य । १० अ–धर्मार्थं ।

[ १२५ श्लो. ] **चतुरि**त्यादि। ब्राह्मणेन ब्राह्मण्यादिषु चतुर्षु जनिताः पुत्रा दशधा विभक्ते धने चतुस्त्रीन् द्वावेकं चांशं यथाक्रमं गृह्णीयुः। क्षत्रजनिताः क्षत्रियादिस्त्रीषु त्रीन् द्वावेकं गृह्णीयाताम्। ऊढाविषयमिदम्॥ १२५॥

[ १२६ श्लो. ] अवलुप्तविभागमाह। **अन्योन्येति**। विभागकाले यद् गोपितं पश्चाद्दृष्टं तत्समं कृत्वा विभजनीयम्। ज्येष्ठस्योद्धारादिकं न देयमित्यर्थः। ऋणेऽप्येतदित्याह **मनुः** (९।२१८)—
"ऋणे धने च सर्वस्मिन् प्रविभक्ते यथाविधि। पश्चाद्दृश्येत यत्किंचित्तत्सर्वं समतां नयेत्"॥१२६॥

[१२७श्लो.]अपुत्रेणेत्यादि। **नियोगो** घृताभ्यंगादिः। **अपुत्रेण** परास्त्रियां **नियोगोत्पादितः उभयोः** श्राद्धधनादिकारी च। एतदुभयानुमत्येत्याह **नारदः** (१२।५८)—
" क्षेत्रिकानुमते क्षेत्रे बीजं यस्य प्रकीर्यते। तदपत्यं द्वयोरेव बीजिक्षेत्रिकयोर्मतम्"॥१२७॥

[१२८ श्लो.]**औरस**इत्यादि। "ऊढायां संस्कृतायां स्वयमुत्पादितमौरसं विद्यात्"(२।२।३।१४ इति **बौधायन**वचनात्। ऊढायां सजातीयायां स्वयमुत्पादित औरसः। औरसेन तुल्यभागः पुत्रिकायाः पुत्रः। पुत्रिकामाह **मनुः** ( ९।१२७ )—
"अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्। यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम्"॥
परस्यानपत्यस्य स्वभार्यायां गुरुनियुक्तायां घृताभ्यक्तादियोगधर्मेण सपिंडेनोत्तमवर्णेन वा जातः क्षेत्रजः।यथा **विष्णुः**(१५।२)-"नियुक्तायां सपिंडेनोत्तमवर्णेन वोत्पादितः क्षेत्रजो द्वितीयः"॥१२८॥

[ १२९ श्लो. ] **गृह** इत्यादि। पति**गृहे प्रच्छन्न** उत्पन्नो **गूढजः** पुत्रो मन्वादिभिः **स्मृतः**। पितृगृहावस्थितायां कन्यायामप्रकाशं सवर्णादुत्पन्नः **कानीनः** पुत्रो **मातामहस्य** स्मृतः। यत्तु **मनुनोक्तम्** ( ९।१७२ )—
"पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः। तं कानीनं विजानीयाद्वोढुः कन्यासमुद्भवम्"॥
तन्मातामहस्यौरसादिपुत्रसद्भावे **विश्वरूपे**णोक्तम्॥ १२९॥

[ १३० श्लो.] **अक्षे**त्यादि। **अक्षतायां क्षतायां** वा संजातमैथुनायामसंजातमैथुनायां विधवायां वा पुनःसंस्कृतायां जातः **पौनर्भवः** पुत्र उत्पादकस्य भवेत्। तथा च **कात्यायनः**(८६०)–
"क्लीबं विहाय पतितं या पुनर्लभते पतिम्। तस्यां पौनर्भवो जातो व्यक्तमुत्पादकस्य सः॥
"माता पिता यमुत्सृज्य प्रदद्यात्तु स दत्तकः"। यथा **मनुः** ( ९।१६८ )—
"माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः"॥१३०॥

[ १३१ श्लो. ] **क्रीत** इत्यादि। मातापितृभ्यां **विक्रीतो**ऽपत्यार्थे गृह्यते स क्रीतःपुत्रः। स च 'सवर्णोऽपि सदृशो वा' इति **वचनात्**। स्वयंकृतं व्याकरोति **मनुः** (९।१६९)—
" सदृशं तु प्रकुर्याद्यद्गुणदोषविचक्षणम्। पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः "॥
दत्तात्मानमाह **मनुः** (९।१७७)—
"मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात्। आत्मानं स्पर्शयेद्यस्तु स्वयंदत्तस्तु स स्मृतः"॥
**गर्भविन्न**माह **मनुः** ( ९।१७३ )—
"या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती। वोढुः स गर्भो भवति सहोढ इति चोच्यते"॥१३१॥

---

१ अ–दकः समः।

[ **१३२ श्लो.** ] **उत्सृष्टेत्यादि** । मातापितृभ्यां त्यक्तोऽपत्यार्थे **गृह्यते** सोऽ**पविद्धः** पुत्रः । **एषा**मौरसादीनां द्वादशपुत्राणां पूर्वपूर्वाभावे उत्तरोत्तरः **पिंड**श्राद्धादिप्रदो भवति धनग्राही च। भ्रातृपुत्रसद्भावे तु क्षेत्रजादयः प्रतिनिधिपुत्रा नाधिकारिणः। यथा **मनुः** ( ९।१८२ )—

" भ्रातृणामेकजातानामेकश्चेत्पुत्रवान् भवेत् । सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् " ॥

ततश्च भ्रातृपुत्राभावे क्षेत्रजादिपुत्रकरणम् । सपत्नीनामप्यपुत्राणां सपत्नीपुत्रसद्भावे स एव। यथा **मनुः** ( ९।१८३ )—

" सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः " ॥

एकपत्नीनामेकपतिकानाम् ॥ १३२ ॥

[ **१३३ श्लो.** ] **सजातीयेत्यादि**। योऽयमौरसादिपुत्रेषु विधिः उक्तः स क्रीतव्यतिरिक्तसमानजातीयेषु प्रतिपत्तव्यः। **दास्यां शूद्रेण जातः** पितुरिच्छात इतरपुत्रतुल्यभागहरो भवति[1] ॥१३३॥

[ **१३४ श्लो.** ] **मृत** इत्यादि। **मृते** तु **पितरि** पितृपरिणीतापुत्रास्तं दासीपुत्रकमर्द्धभागिकं कुर्युः। यदि ते यथाविधा भ्रातरः तथाविधादुहितृजातः पुत्रो नास्ति तदा स एव सर्वं गृह्णीयात् ॥१३४॥

[ **१३५-१३६ श्लो.** ] अपुत्रधनविभागमाह । **पत्नीत्यादि** । पत्न्यभावे दुहितर इत्यादि बोध्यम् । **सब्रह्मचारी** सहाध्यायी ।

**एषामित्यादि** । **अपुत्रस्य** मृतस्य पत्न्यादीनां मध्यात्पूर्वपूर्वाभावे उत्तरो भवति । तथा **विष्णुः** ( १७।४-८ )—"अपुत्रधनं पत्न्यभिगामि । तदभावे दुहितृगामि । तदभावे मातृगामि । तदभावे पितृगामि । तदभावे भ्रातृगामि" इत्यादि एतत्समानार्थम्। तथा **बृहस्पतिः** (२५।४८)—

" सकुल्यैर्विद्यमानैस्तु पितृमातृसनाभिभिः । अपुत्रस्य प्रमीतस्य पत्नी तद्भागहारिणी" ॥

अयं च भ्रातृसद्भावे पत्न्यधिकारोऽत्यंतगुणवत्पत्नीविषयः । गुणश्च श्राद्धशय्यापालनादिरूपः । तथा **वृद्धमनुः**—

"अपुत्रा शयनं भर्तुः पालयंती व्रते स्थिता । पत्न्येव दद्यात्तत्पिंडं कृत्स्नमंशं लभेत च " ॥

एवं चापुत्रस्य[2] स्वर्यातस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेताम्। 'पत्नी वा ज्येष्ठा' इति **पैठीनसि**वचनं निर्गुणव्यभिचारिणीमात्रपत्नीविषयम्[3] ।

"भरणं चास्य कुर्वीत स्त्रीणामा जीवनक्षयात्। रक्षंति शय्यां भर्तुश्चेदाच्छिंद्युरितरासु च[4]"॥ इति **शंखवचनं** अप्येतद्विषयमेव वर्णनीयम्।

" पुत्राभावे तु दुहिता तुल्यसंतानदर्शनात्। पुत्रश्च दुहिता चोभौ तुल्यसंतानकारकौ[5]" ॥ इति **नारदवचनं** ( १३।५० ) पुत्रिकापुत्रविषयम्। तथा **बृहस्पतिः** ( २६।५७ )—

"सदृशी सदृशेनोढा साध्वी शुश्रूषणे तथा । कृताकृता वा पुत्रस्य पितुर्धनहरी तु सा" ॥

कृता वाऽकृता पुत्रिकात्वेन। अकृता न वा कृता मानसीत्यर्थः। पितरौ[6] भ्रातरस्तथेति भ्रातृसद्भावे पित्रोरधिकारः पितृपितामहाद्यार्जितधनविषयः । यत्पितृद्रव्याविरोधेनार्जितं तत् पित्रोः सद्भावे भ्रातृणामेव । यथा **देवलः**—

"ततो दायमपुत्रस्य विभजेरन् सहोदराः। तुल्या दुहितरो वाऽपि म्रियमाणः पिताऽपि वा"॥

एषां पत्न्यादीनां पूर्वपूर्वाभावे परः परः। **स्वर्यातो** मृतः ॥ १३५-१३६ ॥

---

१ **अ**—भवेत् । २ **ब**—मनुः । ३ **ब**—न नियमपरत्वम् । ४ **ब**—च्छेतुर्विधवासु । ५ **ब**—पुत्रः स्यात्पितुः ६ **अ**—पत्नी दुहितरस्तथेति । ७ **ब**—मा।

[ १३७ श्लो. ] **वानप्रस्थे**त्यादि । **धर्मभ्राता** चासावेकतीर्थी चेति कर्मधारयः । **एकतीर्थी** समानगुरुः । व्यक्तमपरम् ॥ १३७ ॥

[ १३८ श्लो. ] **संसृष्टी**त्यादि । संसृष्टिर्बृहस्पतिनोक्तः ( २५।७२ )—
"विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः । पितृव्येणाथ वा प्रीत्या स तु संसृष्ट उच्यते"॥
**संसृष्टि**नोर्भ्रात्रादेर्मृतस्यांशमपरः **संसृष्टी** भ्रात्रादिरेव **हरेत्** गृह्णीयात् । **सोदरस्य** तु संसृष्टिनः **सोदर** एव संसृष्टी गृह्णीयात् । न सापत्नः[1] । यदि गर्भमुत्पाद्य संसृष्टी मृतस्तदा तदपत्ये जाते तस्यांशं तस्यैव[2] दद्यात् । अयं च संसृष्ट्यधिकारः पुत्रपत्नीपितृमात्रभावे । यथा **बृहस्पतिः** (२५।७४)—
"यदि कश्चित्प्रमीयेत प्रव्रजेद्वा कथंचन । न[3] तस्य लुप्यते भागः सोदरस्य विधीयते" ॥१३८॥

[ १३९ श्लो. ] **अन्योदर्य** इत्यादि । अन्योदर्यः संसृष्टी नान्योदर्यस्य धनं हरेत् । **असंसृष्ट्यपि** सोदर एव गृह्णीयात् । न तु संसृष्टः सापत्नो भ्राता । **संसृष्टो** गर्भसंसृष्टः सोदर इति केचित् । 'नान्योदर्यो धनं हरेदिति' पाठे अन्योदर्यः सन्न धनं गृह्णीयादिति व्याख्या । असंसृष्टिसोदराधिकारार्थमिदम् । अतो न पुनरुक्तिः । संसृष्टिनां[4] पुनर्विभागे सम एव भागो यथा **मनुः** ( ९।२१० )—
" विभक्ताः सह जीवंतो विभजेरन्पुनर्यदि । समस्तत्र त्रिभागः स्याज्ज्यैष्ठं तत्र न विद्यते " ॥
विशेषमाह **बृहस्पतिः** ( २५।७७ )—
"संसृष्टिनां तु यः कश्चिद्विद्याशौर्यादिनाऽधिकम् । प्राप्नोति तस्य दातव्यो अशेषास्ते समांशिनः"॥१३९

[ १४० श्लो. ] **क्लीब इ**त्यादि । **तज्जः** पतितोत्पन्नः । **जडः** स्वधर्मकृत्ये निरुत्साहः । अंधो जात्यंधः । ' जात्यंधबधिरौ तथा' ( ९।२०१ ) इति **मनु**वचनादविवादः । एते क्लीबादयो ग्रासाच्छादनादिना यावज्जीवं भरणीयाः । न भागाधिकारिणः ॥ १४० ॥

[ १४१ श्लो. ] **औरसे**त्यादि । **एषां** यथासंभवेन **औरसाः** क्षेत्रजपुत्राः पितृभागाधिकारिणः कार्याः । कन्याश्च तेषां यावद्विवाहे न दत्तास्तावत् पोषणीयाः ॥ १४१ ॥

[ १४२ श्लो. ] **अपुत्रे**त्यादि । ऋज्वर्थः ॥ १४२ ॥ —

[ १४३ श्लो. ] **पितृमातृपतीति** । **अध्यग्नि** अग्निसमीपे विवाहकाले पित्रादिभिर्दत्तम् । **आधिवेदनिकं** द्वितीयविवाहकाले यत्पूर्वपत्न्यै दत्तम् । आधिवेदनिकाद्यमित्यादिग्रहणादध्यावाहनिकादेर्ग्रहणम् । यथा **कात्यायनः**—
"यत्पुनर्लभते नारी नीयमाना हि पैतृकात् । अध्यावाहनिकं नाम स्त्रीधनं समुदाहृतम्"॥१४३॥

[ १४४ श्लो. ] **बन्ध्वि**त्यादि । पितृबंधुमातृबंधुभ्यां दत्तम् । शुल्कमाह **कात्यायनः**–
"गृहोपस्करवाह्यानां दोह्याभरणकर्मणाम् । मूल्यं लब्धं तु यत्किंचित् शुल्कं तत्परिकीर्तितम्"॥
**अन्वाधेयमाह**
"विवाहात्परतो यत्तु लब्धं मातृकुलात् स्त्रिया । अन्वाधेयं तु तत्प्रोक्तं लब्धं बंधुकुलात्तथा"॥
एतच्चासुरादिविवाहोढाया अनपत्याया मृताधनं बंध्वादिदत्तं बांधवा भ्रातरो गृह्णीयुः । यथा **गौतमः** (२८।२५)–"भगिनीशुल्कं सोदर्याणां ऊर्ध्वं मातुः पूर्वं चैके" । ऊर्ध्वं मातुः[5] उपरतावित्यर्थः । माता-

---

१ ब–त्न्यः । २ अ–तस्मै । ३ ब–न लुप्यतेऽस्य संसृष्टिर्नान्योदर्यो धनं हरेत् । ४ ब–नि । ५ अ–ऊर्ध्वं मातुः पित्रुपरतावित्यर्थः ।

पित्रोस्तु सद्भावे तयोरेव । यथा **मनुः** (९।१९७)—

"यत्तस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु । अतीतायामप्रजसि मातापित्रोस्तदिष्यते" ॥१४४॥

[ १४५ श्लो. ] **अप्रजेत्यादि** । ब्राह्मादिषु विवाहेषु अनपत्यस्त्रीधनं भर्तृगामि । यदि तत्प्रसूताः कन्याः संति चेत्तदा तासामेव । शेषेष्वासुरादिषु मातापित्रोरेव मातृष्वस्रादीनाम् । भर्त्राद्यभावे धनाधिकारित्वमाह **बृहस्पतिः** ( २५।८८–८९ )—

"मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा । श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः॥
"यदासामौरसो न स्यात् सुतो दौहित्र एव च । तत्सुतो वा धनं तेषां स्वस्रीयाद्यास्तदाप्नुयुः"॥१४५॥

[ १४६ श्लो. ] दत्वेत्यादि । वाचा कन्या **दत्वा हरन्** कारणमंतरेण **दंड्यो** भवति । यच्च वरेण **दत्तं** हिरण्यादिकं तत्सवृद्धिकं कन्यापिता दद्यात् । वाग्दत्तायां कन्यायां मृतायां पितृसंबंधिनां वरसंबंधिनामुपचारार्थं यद्दत्तं तदुभयं परिशोध्य यदवशिष्टं शुल्कं तत्सकलं वरो गृह्णीयात् ॥१४६॥

[१४७श्लो.] **दुर्भिक्षेत्यादि**। संप्रतिरोधके भोजनाद्यर्थं उपरोधकारिणि । उत्तमर्णे यद्गृहीतं इत्यर्थः॥

[ १४८ श्लो. ] अधीत्यादि । कृतसापत्निकायै स्त्रियै अधिवेदननिमित्तं तुल्यधनं देयम् । तत्परिणीयमानायै यद्दीयते तावदित्यर्थः । **दत्ते** स्त्रीधने **त्वर्धं** दद्यात् ॥ १४८ ॥

[ १४९ श्लो. ] **विभेत्यादि** । विभागापलापे सति ज्ञात्यादिभिर्विभागप्रतिपादनं गृहक्षेत्रैश्च पृथक्भूतैः । तथा **नारदः**—

"पृथगायव्ययधनाः कुसीदं च परस्परम् । वणिक्पथं च ये कुर्युर्विभक्तास्ते न संशयः" ॥१४९॥

इति **विभागप्रकरणम्** ।

## अथ सीमाविवादप्रकरणम् ॥

[ १५०–१५१ श्लो. ] **सीम्नेति** । **नय इति** । क्षेत्रस्य सीम्नो विवादे **सामंता** देशभवा **वृद्धाः** । आदिग्रहणाद्व्याधादयः । प्रकाशचिन्हैः स्थावरादिभिः उपांशुचिन्हैरंगारादिभिः उपलक्षितां सीमानं **नयेयुः** ॥ १५२ ॥

[ १५२ श्लो. ] **सामेत्यादि**। यदि संशय एव लिंगानामपि दर्शने स्यात् तदा सन्निहितग्रामवासिनः चत्वारो अष्टौ दश वा समसंख्या लोहितपुष्पमणिभारिणो लोहितवाससः पूर्वोक्तशपथैः शापिता मृत्पिंडं शिरोभिर्गृहीत्वा सीमामुपनयेयुः ॥ १५२ ॥

[ १५३ श्लो. ] **अनृतेत्यादि** । मिथ्याभिधाने **राज्ञा पृथक्** पृथक् **मध्यमसाहसं दंड्याः** । ज्ञातृचिन्हाभावे राजैव स्वयं सीमाकारकः स्यात् ॥ १५३ ॥

[ १५४ श्लो. ] **आरामेत्यादि** । एतेष्वारामादिषु अयमेव सीमंतसाक्ष्यादिलक्षणो **विधि**र्ज्ञातव्यः । आदिशब्दात् क्षेत्रादयो गृह्यंते ॥ १५४ ॥

[ १५५ श्लो. ] **मर्येत्यादि**। **सीमाभंगे** सीमातिक्रमे क्षेत्रहरणे यथाक्रमं मध्यमोत्तममध्यमा **दण्डाः** बोद्धव्याः ॥ १५५ ॥

[१५६ श्लो.] **न नीत्यादि**। अन्यक्षेत्रेऽन्येन क्रियमाणः सेतुर्यदि **बहूपकारकः** क्षेत्रस्वामिनश्चाल्पबाधाकरस्तदासौ न निषेध्यः । एवं कूपोऽपि ॥ १५६ ॥

---

१ **अ**–भ्राता । २ **ब**–शोद्र । ३ **अ**–माल ।

[ १५७ श्लो. ] **स्वामी**त्यादि। क्षेत्रस्वाम्यनुमतिमंतरेण यः **क्षेत्रे सेतुं** करोति तस्मिन् सेतौ निष्पन्ने तत्क्षेत्रस्वामिनः तत्सेतावुपभोगः । तदभावे राज्ञः ॥ १५७ ॥

[ १५८ श्लो. ] **फाले**त्यादि। हलाहतमिति क्वचित्पाठः। फालाकृष्टमपि क्षेत्रं स्वीकृत्य यो बीजवपनं न करोति न कारयति वा तमकृष्टस्यैव क्षेत्रस्य सदं सस्यादि यत्फलं तत्कृष्टक्षेत्रानुसारेण दापयित्वाऽन्येन कारयेत् ॥ १५८ ॥ इति **सीमाविवादप्रकरणम्** ॥

## अथ स्वामिपालविवादप्रकरणम् १०

[१५९ श्लो.] **माषे**त्यादि। माषोऽत्र पणस्य विंशतितमो भागः। माहिष्यादिशब्देन तद्रक्षकोऽभिधीयते। महिषीनिमित्ते सस्यनाशेऽष्टौ माषान् तत्पालको दंड्यः। गोनिमित्ते चतुरः। अजमेषनिमित्ते द्वौ द्वौ ॥ १५९ ॥

[ १६० श्लो. ] **भक्षे**त्यादि। भक्षयित्वा स्वेच्छयोपविष्टानां यथोक्ताद्विगुणा दंडाः कार्याः। **एषां** महिष्यादीनां **विवीतेऽपि सममेव** दंडनम्। विवीतशब्देन तृणाद्यर्थं रक्षितो भूप्रदेश उच्यते। खरोष्ट्रकृतसस्यादिमर्दनेऽपि **महिषीसममेव** दंडनं कार्यम् ॥ १६० ॥

[ १६१ श्लो. ] **यावदि**त्यादि। महिष्यादिदोषेण **यावत्सस्यं** विनश्यति **तावदेव** सामंतादिभिराकलितं कर्षको गोपालात् प्राप्नोति। असंभवे **गोपस्ताड्यो** गोस्वामी तु पूर्वोक्तदंडमर्हति ॥ गोभक्षितधान्यप्रार्थनायां दोषमाह **उशनाः**–

"गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते। पितरस्तस्य नाश्नंति नाश्नंति च दिवौकसः"॥१६१॥

[ १६२ श्लो. ] **पथी**त्यादि। **पथि** ग्रामविवीतानां समीपे क्षेत्रे पालाद्यनिच्छया महिष्यादिभिर्भक्षिते सस्ये पालादीनां दोषो नास्ति। इच्छया तु भक्षिते पूर्वदंडः ॥ १६२ ॥

[ १६३ श्लो. ] **महोक्षे**त्यादि। महाबलीवर्दो देवोद्देशेन चक्रादिभिरंकितोत्सृष्टः पशुः। पशुता च गौरनिर्गतदशाहा। **आगंतुकाश्च**। आदिग्रहणात्

"अदंड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः।अदंड्याः काणः कुब्जश्च वृषश्च कृतलक्षणः"॥

इत्यादयो ग्राह्याः। एषां मध्ये येषां पालाश्च विद्यंते ते मोच्याः। पालो दंडनीय इत्यर्थः॥ तथा **देवराजोपरिप्लुताः** दैवराजोपहताश्च ॥ १६३ ॥

[ १६४ श्लो. ] **यथे**त्यादि। यथैव प्रातःसमये व्रणादिदोषरहिताः पशवः स्वामिना गोपाले समर्पिताः तथैव सायं समये गोपस्तानानीय समर्पयेत्। प्रमादान्मृतान्नष्टांश्च गोपो दाप्यः। यदि स कृतवेतनो भवेत् ॥१६४॥

[ १६५ श्लो. ] **पाले**त्यादि। गोपालदोषाद्विनष्टे पशावर्द्धत्रयोदशपणा गोपस्य **दंडो विधीयते। स्वामिने तु द्रव्यदानम्**। प्रमादान्मृतनष्टांश्चेति पूर्वोक्तमपि द्रव्यदानासंभवे मूल्यदानार्थम्॥१६५॥

[१६६ श्लो.] **ग्राम** इत्यादि। ग्रामस्य जनपदेच्छया गवादिप्रचारदेशः कार्यः। राजेच्छया वा भूमिः। द्विजः तृणोदकादीनि सर्वतोऽटव्यादिदेशासंभवेऽन्यपरिगृहीतादप्यात्मीयवदाहरेत् ॥१६६॥

[ १६७ श्लो. ] **धनुरि**त्यादि। चतुर्हस्तं **धनुस्तस्य शतं** प्रस्तारः। ग्रामक्षेत्रयोरंतरं सर्वासु दिक्षु पशुप्रचारार्थं भवेत्। **कर्वटस्य** बहुकारुकृषीवलस्य ग्रामस्य द्विगुणम्। **नगरस्य** चतुर्गुणम्॥१६७॥

इति **स्वामिपालविवादप्रकरणम्**।

---

१ अ स्वाव। २ ब-लिने।

## अथ अस्वामिविक्रयप्रकरणम् ११

[ १६८ श्लो. ] **स्वं लभेते**त्यादि । आत्मीयं द्रव्यं संमतिव्यतिरेकेणान्यविक्रीतं पूर्वस्वामी प्राप्नुयात् । **क्रेतुरप्रकाशे** क्रये दोषो भवेत् । तथा **हीना**दसंभाव्यमानतद्द्रव्यात् चण्डालादेः संभाव्यमानधनादपि निर्जनेऽल्पमूल्येन क्रीते **क्रयवेलाहीने** च क्रीतं क्रेतुर्हस्ताच्च द्रव्यं प्राप्नुयात् । क्रेता च **तस्करः** स्यात् ॥ १६८ ॥

[ १६९ श्लो. ] **नष्टे**त्यादि । स्वामी च **नष्टापहृतं** द्रव्यं प्राप्य **हर्तारं** चौरोद्धरणकादिहस्तेन **ग्राहयेत्** । यदा चौरोद्धरणकादयो न तद्देशस्थास्तदानयनकालातिपाताद्रक्षणमशक्यं तदा **स्वयमेव** नीत्वा **तमर्पयेत्** ॥ १६९ ॥

[ १७० श्लो. ] **विक्र** इत्यादि । क्रेतुर्विक्रेतुर्**दर्शनाच्छुद्धि**र्भवति । एतदप्रकाशक्रये । यथा **बृहस्पतिः**—

"प्रकाशं वा क्रयं कुर्यान्मूलं वाऽपि समर्पयेत् । मूलानयनकालश्च देयो योजनसंख्यया" ॥

मूलं विक्रेतारं पूर्वस्वामी क्रेतुर्हस्ताद्धनं गृह्णीयात् । अप्रकाशक्रये क्रेतुः सकाशाद्राजा दंडं गृह्णीयात् । क्रेता विक्रेतुः सकाशान्मूल्यं गृह्णीयात् । वणिग्वीथ्यादिगोचरतया क्रयणे स्वामिने च न देयमित्याह **मरीचिः**—

"वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः । अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः ॥
"स्वामी दत्वाऽर्धमूल्यं तु प्रगृहीत स्वकं धनम् । अर्धं द्वयोरपहृतं तत्र स्याद्व्यवहारतः ॥
"अविज्ञातक्रये दोषस्तथा चापरिपालनम्" ॥ १७० ॥

[ १७१ श्लो. ] **आगमे**त्यादि । **आगमेन** प्रतिग्रहादिना धनोपायेन नष्टं धनं नाष्टिकेन विभावनीयम् । **अतोऽन्यथा** नाष्टिकेनाविभाविते पंचमांशो दंडो राज्ञा ग्राह्यः ॥ १७१ ॥

[ १७२ श्लो. ] **हृते**त्यादि । **हृतं प्रणष्टं** वा चौरादिहस्तान्मदीयामिति नृपस्यानिवेद्यैव यो गृह्णाति स दंड्यः । तस्करप्रच्छादकत्वेन दुष्टत्वात् ॥ १७२ ॥

[१७३ श्लो.] **शौल्की**त्यादि । नष्टचौराद्यपहृतं वा शौल्किकादिभिः प्राप्तं तत् **संवत्सरादर्वाक् स्वामी** गृह्णीयात् । **परतस्तु** राजा । **मन्वादिभिः** "प्रणष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत्" (८।३०) इति त्र्यब्दं यावद्राज्ञा रक्षणीयमिति यदुक्तं तत्सुवर्णादिस्थास्नुद्रव्यपरम् ॥ १७३ ॥

[ १७४ श्लो. ] **पणे**त्यादि । **एकशफे** अश्वादौ प्रणष्टाधिगते राज्ञे रक्षणनिमित्तं **चतुरः पणान्** दद्यात् । व्यक्तमपरम् ॥ १७४ ॥ इति **अस्वामिविक्रयप्रकरणम्** ॥

## अथ दत्ताप्रदानिकप्रकरणम् १२

[१७५ श्लो.] **स्वकुटुंबे**त्यादि । भार्यापुत्रव्यतिरिक्तं **स्वकुटुंबपोषणाविरोधेन देयम्** । पुत्रादौ तु सति **न सर्वस्वं** देयम् । अन्यस्मै यदनुमतं तदन्यस्मै न देयम् । आपत्काले पुत्रादयो देया इत्याह **कात्यायनः** ( ६३८, ६३९ )

"विक्रयं चैव दानं च न देयाः स्युरनिच्छवः । आपत्काले तु कर्तव्यं दानं विक्रय एव वा" ॥

---

१ ब–रिक्के । २ क–सार । ३ इ–तद्देयम् ।

[ १९४ श्लो. ] दाप्य इत्यादि। यः पुनरनिश्चित्यैव भृतिं कर्म कारयति स राज्ञा वाणिज्य-पशुसस्यानामुत्पन्नानां दशमं भागं दाप्यः ॥ १९४ ॥

[ १९५ श्लो. ] देशमित्यादि । यो हि निश्चितांतराद्द्रव्यंदेशादधिकमपि देशं भारादिकं नयेत् । नियमितकालादधिकमपि कर्म करोति कर्म स्वरूपादधिकमपि कर्म करोति तत्र भृतिदाने स्वामिन इच्छा आधिके पुनरवश्यमधिकं देयम् । न्यूने न्यूनं अत एव इच्छा ॥ १९५ ॥

[ १९६ श्लो. ] **यो यावदि**ति । यो **यावत्कर्म कुरुते** तस्य तत्कर्मानुसारेण **वेतनं** देयम् । यद्युभयोस्तत्कर्मसमापनमसाध्यं स्यात् । **साध्ये** पुनः समापने यथांगीकृतमेव वेतनं देयम् ॥ १९६॥

[ १९७ श्लो. ] **अराज्ञे**त्यादि । राजदैवव्यतिरेकेण यदि वाहकदोषेण भांडं वणिक्धनं कुंकुमादिकं नश्येत्तदा वाहकस्तन्नेता तद्दाप्यः । यात्रासमये च विघ्नमाचरन् **द्विगुणां भृतिं** दापनीयः ॥ १९७ ॥

[ १९८ श्लो. ] **प्रक्रान्ते**ति । वहनोपक्रमसमये स्थान एव भृतिकर्म **त्यजन्** भृतेः सप्तमं भागं **त्याजको** दाप्यः । व्यक्तमपरम् ॥ १९८ ॥

## अथ द्यूतसमाह्वयौ १७

[ १९९ श्लो. ] **ग्लह** इत्यादि । द्यूतसमय एव प्रतिशतं यत्र द्यूतकारैरल्पा वृद्धिर्गृहीता सगणाच्छतिकवृद्धिः तस्मात् **धूर्तकितवात्** द्यूतकारात् द्यूतसभाकारी पंचकं शतं गृह्णीयात् । अगृहीतगणाच्छतिकवृद्धेर्**दशकं शतम्** ॥ १९९ ॥

[२०० श्लो.] **स सभ्ये**ति । सभिको राज्ञा सम्यक् पालिते[2] राज्ये सन् राज्ञे यथाकृतं[1] भागं दद्यात् । **जितं** द्रव्यं क्षमीभूत्वा द्यूतकारसकाशात् गृह्णीयात् । जेत्रे च द्यूतकाराय च तद्द्रव्यं सत्यैपगे दद्यात् । विशेषमाह **बृहस्पतिः** ( २६।७ )–

"रहो जितोऽनभिज्ञश्च कूटाक्षैः कपटेन वा । मोच्योऽभिज्ञोऽपि सर्वस्वं जितः सर्वं न दाप्यते" ॥२००॥

[ २०१ श्लो. ] **प्राप्त** इत्यादि । **नृपतिना** स्वीयैभागे प्राप्ते द्यूतकारसमूहे सस्सभिके स्थाने प्रसिद्धे जितं द्रव्यं राजा दापयेत् । नान्यथा ॥ २०१ ॥

[ २०२ श्लो. ] **द्रष्ट्रि**त्यादि । द्यूतव्यवहारस्य **द्रष्टारः साक्षिणश्च त एव द्यूतकाराः** । कूटाक्षदेविनः छलदेविनश्च राज्ञा चिन्हं कृत्वा निःसार्याः । यथा **नारदः** ( १६।६ )–

"कूटाक्षदेविनः पापान् निर्हरेद्द्यूतमंडलात् । कंठेऽक्षमालामासज्य स ह्येषां विनयः स्मृतः" ॥२०२॥

[ २०३ श्लो. ] **द्यूतमि**त्यादि । यदेतत् द्यूतं तत्तस्करज्ञानार्थं प्रधानपुरुषाधिष्ठितं कार्यम् । अयमेव प्रकारः **प्राणिद्यूते** समाह्वयाख्ये वेदितव्यः । प्राणिभिर्मेषकुक्कुटाभिर्यत्पणपूर्वकं क्रियते तत्प्राणिद्यूतम् । **यद्यपि**

" द्यूतं समाह्वयं चैव यः कुर्याद्यस्तु कारयेत् । तान्सर्वान्घातयेद्राजा शूद्रांश्च द्विजलिंगिनः " ॥

( ९।२२४ ) इति **मनु**वचनात् द्यूतं निषिद्धं तथापि कथंचित् प्रवृत्तौ व्यवहारविधिरुक्तः ॥२०३॥

**इति द्यूतसमाह्वयप्रकरणम्** ॥

---

१ अ–कारेभ्यो । २ अ–तः सन् । ३ ब–+पापाण । ४ अ–स्वकीये ।

## अथ वाक्पारुष्यम् १८

[ २०४ श्लो. ] **सत्येत्यादि**। न्यूनांगन्यूनेंद्रियरोगिणां सत्येन असत्येन प्रकारांतरेण वा स्तोत्रैः क्षेपमाक्रोशं चेत्करोति तदाऽर्धत्रयोदशपणानसौ दंडनीयः।
वाक्पारुष्यलक्षणमाह **नारदः** ( १५।१ )—

"देशजातिकुलादीनामाक्रोशे न्यंगसंज्ञितम्। यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते"॥२०४॥

[ २०५ श्लो. ] **अभीत्यादि**। **पंचविंशतिकं** पंचविंशतिपणपरिमितम्। व्यक्तमपरम्। क्वचित् 'मातरं वा तथाविधम्' इति पाठः॥ २०५॥

[२०६ श्लो.] **अर्द्ध** इत्यादि। समवर्णेष्वाक्षेप्त्रपेक्षया निकृष्टगुणादिषु अधमेष्वाक्षेप्तुः पंचविंशतेरर्धो दंडो ग्राह्यः। **परस्त्रीष्वाचार्यादिषु** च स **द्विगुणः** पंचाशत्संख्यः। **वर्णा** ब्राह्मणाद्याः। **जातयो** मूर्धाभिषिक्ताद्याः। एषामप्युत्तमैरधराक्षेपे अधरैरुत्तमाक्षेपे वक्ष्यमाणं दंडप्रणयनं कार्यम्। स्पष्टमन्यत्॥ २०६॥

[ २०७ श्लो. ] **प्रातीत्यादि**। ब्राह्मणापवादे क्षत्रियस्य शतं वैश्यस्य सार्धशतं दंडं इत्यर्थः। अर्थाच्चतुर्गुणेन शूद्रस्य शतद्वयम्। स्पष्टमन्यत्। अनुलोमाक्षेपे दंडमाह **मनुः** (८।२६८)—
"विप्रः पंचाशतं दंड्यः क्षत्रियस्याभिशंसने। वैश्ये स्यादर्धपंचाशच्छूद्रे द्वादशको दमः"॥२०७॥

[ २०८ श्लो. ] **बाहु** इति। 'बाहुं ते छेत्स्यामि' इति वचनकृते विनाशे **शत्यः** शतपरिमितो दंडः। पादादिषु तु अर्धपंचाशदित्यर्थः॥ २०८॥

[ २०९ श्लो. ] **अशक्त** इत्यादि। विनाशकरणासमर्थस्त्वेवं वदन् **दश पणान्** दंड्यः। **शक्तः** पुनरेवं वदन् पूर्वोक्तं शतं दंडयित्वा अशक्तक्षेमार्थं लग्नकं दापयितव्यः॥ २०९॥

[ २१० श्लो. ] **पतनीयेत्यादि**। ब्राह्मणस्य 'ब्रह्महा त्वमसि' इत्यादि पतनीयाक्रोशे क्षत्रियस्य मध्यमसाहसं दंडः कार्यः। गोवधादौ तु **प्रमथं** दमं **साहसं** दाप्यः॥ २१०॥

[ २११ श्लो. ] **त्रैविद्येत्यादि**। त्रैविद्यादीनामाक्रोशकारिणः उत्तमसाहसम्। **जातीनां** मूर्धाभिषिक्तादीनां वणिगादिसमूहादीनां मध्यमसाहसं **ग्रामदेशयोः** प्रथमसाहसं दंडः॥ २११॥

॥ इति **वाक्पारुष्यविवादप्रकरणम्**॥

## अथ दण्डपारुष्यम् १९

[ २१२ श्लो. ] **असाक्षिके** इत्यादि। असाक्षिकदेशे परं हत्वा स्वदेहं रुधिराक्तं कृत्वा वदति 'अहमनेन ताडितः' इति। तत्र कूटचिन्हकारिताद्भयात् अव्यभिचरितचिन्हैराप्तवचनादिभिश्च व्यवहारो यथार्थतो द्रष्टव्यः। दंडपारुष्यलक्षणमाह **बृहस्पतिः** ( २१।१ )—

"दंडपाषाणलगुडैर्भस्मकर्दमपांसुभिः। आयुधैश्च प्रहरणं दण्डपारुष्यमुच्यते"॥ २१२॥

[ २१३ श्लो. ] **भस्मेत्यादि**। भस्मादीनां परांगस्पर्शे दशपणो दंडः। अमेध्यादीनां स्पर्शे स एव द्विगुणः॥ २१३॥

---

१ ब—सम। २ अ—गोवधाद्युपपातकाक्रोशे।

[ २१४ श्लो. ] **समेत्यादि** । एवमेव उक्तलक्षणो दंडः समजातीयेषु **परस्त्रीषु** च उत्तमजातीयेषु च द्विगुणः । हीनजातीयेष्वर्धः । **मोहादिना** कृतेऽ**दंडनमेव** ॥ २१४ ॥

[ २१५ श्लो. ] **विप्रेति** । ब्राह्मणपीडाकरं हस्तादिकमब्राह्मणस्य छेदनीयम् । उद्यमे कृते तु **प्रथमो दंडः** । उद्यमार्थं शस्त्रस्पर्शे त्वर्धः ॥ २१५ ॥

[ २१६ श्लो. ] **उद्गूर्णेत्यादि** । प्रहारार्थमन्योन्यं कृतोद्यमे हस्ते पादे च यथाक्रमं दशविंशतिकौ दमौ । शस्त्रोद्यमे कृते मध्यमसाहसम् ॥ २१६ ॥

[ २१७ श्लो. ] **पादेत्यादि** । पादाद्याकर्षणे कृते दश **पणान्** दंड्यः । पीडाकर्षः अंशुकावेष्टश्च पादन्यासश्चेति समाहारः । अंशुकेनावेष्ट्य गाढमापीड्याकृष्ट्य यः पादेनाध्यास्ते तस्य पणशतं दंडः ॥ २१७ ॥

[ २१८ श्लो. ] **शोणितेनेति** । काष्ठादिना दृढघातं कुर्वन् द्वात्रिंशतं **पणान्** दंड्यो यदि शोणितं न दृश्यते । **दर्शने** तु द्विगुणो दंडः ॥ २१८ ॥

[ २१९ श्लो. ] **करेत्यादि** । करादिभंगे कर्णस्य नासिकायाश्च छेदे रोपितव्रणस्य भेदे मृतकल्पे च हते मध्यो दंडः ॥ २१९ ॥

[ २२० श्लो. ] **चेष्टेत्यादि** । चेष्टादीनां **रोधे** नेत्रादिभेदे कंधरादीनां च भंगे मध्यमं साहसं दंड्यः ॥ २२० ॥

[ २२१ श्लो. ] **एकमित्यादि** । बहूनां मिलित्वा एकं मारयतां यथोक्तात् द्विगुणा दंडाः कार्याः । कलहे च यस्य यदपहृतं तद्देयं राज्ञे च तद्द्विगुणं तद्दंडार्थं देयम् ॥ २२१ ॥

[ २२२ श्लो. ] **दुःखमित्यादि** । करचरणादिभंगेन यो यस्य दुःखमुत्पादयति स **तत्समुत्थानजं व्ययं** दद्यात् । यावता कालेन पथ्यादिना समर्थो भवेत् तावंतं कालमित्यर्थः । **कलहे** यो दंडोऽभिहितस्तमप्यसौ दापनीयः ॥ २२२ ॥

[ २२३ श्लो. ] **अभिघातेत्यादि** । लगुडाद्यभिघाते यष्ट्यादिना विदारणे खड्गादिना छेदने यथाक्रमं पंचदशविंशतिपणान् दाप्यः । तथा कुड्येष्टकाद्यवपातेऽपि सन्निधानाद्विंशतिरेव पणाः प्रतिवक्तव्याः । तत्समुत्थानजं व्ययं दाप्यः ॥ २२३ ॥

[ २२४ श्लो. ] **दुःखोत्पादीत्यादि** । कंटकादिद्रव्यं **गृहे क्षिपन्** सर्पादिकं च तत्र प्रथमः षोडशपणान् दाप्यः । **द्वितीयो** मध्यमो दमः ॥ २२४ ॥

[ २२५ श्लो. ] **दुःखे इत्यादि** । क्षुद्रपशूनामजाव्यादीनां दुःखोत्पादे **शोणितोत्पादे** शाखाशृंगादिरंगचरणादि तच्छेदने च द्विपणप्रभृतिर्द्वैगुण्येन चतुःपणादिक्रमेण दंडो वेदितव्यः । क्वचित् 'द्विगुणात् द्विगुणः क्रमात्' इति पाठः ॥ २२५ ॥

[ २२६ श्लो. ] **लिंगेत्यादि** । क्षुद्रपशूनां लिंगछेदने मारणे च मध्यमसाहसं पशुस्वामिने च तन्मूल्यं दाप्यः । **महापशूनां** गवाश्वादीनाम् । एतेषु पूर्ववचनैतद्वचनेषु **द्विगुणो दमः** कार्यः ॥२२६॥

[२२७ श्लो.]**प्ररोहेत्यादि** । **प्ररोहशाखिनां वटादीनां उपजीव्यद्रुमाणामा**म्रादीनां शाखाछेदने स्कंधछेदने च यथाक्रमं विंशतिपणादारभ्य पूर्वस्मात्पूर्वस्मादुत्तरोत्तराद्विगुणा दंडाः कार्याः ॥२२७॥

---

१ ब—स्नेहा ।

[ २२८ श्लो. ] **चैत्येत्यादि**। **चैत्य** उद्देशवृक्षः। विश्रुतो विख्यातः। एषां स्कंधादिविदारणे विंशतिरित्यनुषज्यते ॥ २२८ ॥

[ २२९ श्लो. ] **गुल्मेत्यादि**। **गुल्मा** मालत्यादयः। **गुच्छाश्च** कुरंटकादयः। **क्षुपाः** करवीरादयः। **लता** द्राक्षादयः। **प्रताना** कांडप्ररोहरहिताः शारिवादयः। **ओषधयः** फलपाकांता धान्यादयः। वीरुधः छिन्ना अपि विविधं प्ररोहंति गुडूच्यादयः। एतेषां स्कंधादिकर्तने पूर्वोक्तादर्धदंडाः। तदुत्पत्तिदानं च ॥ २२९ ॥ इति **दण्डपारुष्यप्रकरणम्** ॥

## अथ साहसम् २०

[ २३० श्लो. ] **सामान्येत्यादि**। **सामान्यद्रव्यं** हीनद्रव्यं धान्यादि अनेकस्वामिकं वा। सामान्यद्रव्यस्यापि धान्यादेः स्वामिसमक्षं प्रसभहरणात् बलात्कारग्रहणात् विवादपदं साहसं स्मृतम्। यच्च स्वामिपरोक्षं कृतं कृत्वा वा पश्चादपन्हुतं तत् स्तेयम्। यथा **मनुः** (८।३३२)—

"स्यात्साहसं त्वन्वयवत् प्रसभं कर्म यत्कृतम्। निरन्वये भवेत्स्तेयं कृत्वाऽपव्ययते तु यत्"॥

अन्वयवत् स्वामिसमक्षं निरन्वये भवेत् स्तेयम्। अपव्ययते निह्नुते। **नारदेन** मनुष्यमारणादिकं पंचसाहसमुक्त्वा बलात्कारकृतमेव साहसमुक्तम्। यथा ( १४।२-८ )—

"मनुष्यमारणं चौर्यं परदाराभिमर्शनम्। पारुष्यमुभयं चेति साहसं पंचधा स्मृतम् ॥ २ ॥
"तत् पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा। उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥३॥
"फलमूलोदकादीनां क्षेत्रोपकरणस्य च। भंगाक्षेपोपमर्दाद्यैः प्रथमं साहसं स्मृतम् ॥ ४ ॥
"वासःपश्वन्नपानानां गृहोपकरणस्य च। एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥ ५ ॥
"व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम्। प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥ ६ ॥
"तस्य दंडः क्रियाक्षेपः प्रथमस्य शतावरः। मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पंचशतावरः ॥ ७ ॥
"उत्तमे साहसे दंडः सहस्रावर उच्यते।
"वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने। तदंगच्छेद इत्युक्तो दंड उत्तमसाहसः" ॥ ८ ॥

[ २३१ श्लो. ] **य इत्यादि**। यः 'साहसं कुरु' इत्येवं वाचैवं कारयति असौ साहसिकाद्दण्डात् द्विगुणं दंडं दाप्यः। यः पुनः 'अहं तुभ्यं धनं दास्यामि' इति 'त्वं कुरु' इत्यभिधाय कारयति स चतुर्गुणं दंडं दाप्यः। अनुबंधातिशयात् ॥ २३१ ॥

[ २३२ श्लो. ] साहसविशेषं प्रत्याह।**अर्घ्याक्रोशेत्यादि**। **अर्घ्यस्य** अर्घार्हस्याचार्यादेराक्षेपमाज्ञातिक्रमं च यः करोति यश्च **भ्रातृभार्यां** ताडयति तथा **संदिष्टस्यार्थस्याप्रदाता** यस्तु मुद्रितं गृहमुद्घाटयति तथा स्वगृहक्षेत्रादिसंसक्तगृहक्षेत्रादिस्वामिनां **कुलिकानां** स्वकुलोद्भवानां **आदि**ग्रहणात् स्वग्राम्यस्वदेशीयानां च योऽपकर्ता स वै पंचाशत्परिमितेन दंडेन दंडनीयः॥२३२॥

[ २३३ श्लो. ] **सामंतेत्यादि**। **सामंतस्य** तांबुलिकादेः **कुलाधिकृतस्य** च। **आदि**ग्रहणात् श्रेण्यादेश्चापकारकर्तुः पंचाशत्पणपरिमितो दंडः कार्यः ॥ २३३ ॥

---

१ अ–स्थिरा। २ अ–हृ। ३ ब–समन्येन।

४ ब–जातिरित्यादिना प्रष्टत्याक्षेपस्य चातिक्रमस्य च कर्ता भ्रातृभार्यायां प्रहारस्य कर्ता संदेशद्रव्यस्याप्रदाता मुद्रायुक्तस्य गृहस्य मुद्राभेत्ता एषां वक्ष्यमाणपंचाशत्पणपरिमितो दंडः कार्यः ॥ (२३२)

[ २३४ श्लो. ] **स्वच्छंदेति**। नियोगं विना यः स्वेच्छया विधवां गच्छति । चौर्यादिभयाकुलैर्विक्रुष्टो यः शक्तोऽपि नाभिधावति यश्च वृथाऽऽक्रोशं करोति। यश्चांडालो ब्राह्मणादीन् स्पृशति॥२३४

[२३५ श्लो.] **शूद्रेति**। यश्च प्रव्रजितान् दिगंबरादीन् दैवे पित्र्ये च कर्माणि भोजयति।यश्चायुक्तं 'मातरं ग्रहीष्यामि' इति शपथं करोति। यश्च योग्य एव शूद्रादिरयोग्यकर्माध्यापनादि करोति॥२३५

[ २३६ श्लो. ] वृषेत्यादि। **वृषो** बलीवर्दः। **क्षुद्रपशवो**ऽजादयस्तेषां पुंस्त्वस्य प्रजननशक्तेर्विनाशकः ' वृक्षक्षुद्रपशूनाम् ' इति पाठे हिंग्वाद्यौषधप्रयोगेन वृक्षादेः फलप्रसूनानां पातयिता। साधारणद्रव्यस्य वंचकः । **दासीगर्भस्य** पातयिता ॥ २३६ ॥

[ २३७ श्लो. ] पितेत्यादि । ये च पित्रादयोऽपतिता एव संतोऽन्योन्यं त्यजंति । ते सर्वे पणशतं दंडार्हा भवंति ॥ २३७ ॥

## इति साहसप्रकरणम् ।

[ २३८ श्लो. ] साहसप्रसंगात्तत्सदृशापराधेषु नेजकादीनां दंडमाह। **नेजको** वस्त्रस्य धावकः। स यदि निर्णेजनार्थं समर्पितानि वासांसि स्वयमाच्छादयति तदासौ पणत्रयं दंड्यः । यः पुनस्तानि विक्रीणीतेऽवक्रयं वा एतावत्कालं उपभोगार्थं दीयते मह्यमेतावद्धनं देयमित्येवं भाटकं यो ददाति आधित्वं[1] वा नयति सुहृद्भ्यो वा याचितं ददाति असौ प्रत्यपराधं दशपणान् दण्डनीयः। तानि च वस्त्राणि श्लक्ष्णशाल्मलिफलके क्षालनीयानि न पाषाणे। "न च वासांसि वासोभिर्निर्हरेन्न च वासयेत्" ( ८।३९६ ) इति **मनुस्मरणात्** ॥ २३८ ॥

[ २३९ श्लो. ] **पितेत्यादि**। पितापुत्रकलहे साक्षिणां पणत्रयदंडः। तयोरेव मध्यवर्ती तस्याष्टौ पणान् दंडः ॥ २३९ ॥

[२४० श्लो.] **तुलेत्यादि** । तुलादीनां कूटकर्ता एभिश्च ज्ञानतः क्रयविक्रयकारः ।**नाणकः** वृणकादिः ॥ २४० ॥

[ २४१ श्लो. ] **स नाणकपरीक्षकः** टंककपरीक्षकः । व्यक्तमपरम् ॥ २४१ ॥

[ २४२ श्लो. ] **तिर्यक्षु** गवादिषु सामान्यमानुषेषु मध्यमम् ॥ २४२ ॥

[ २४३ श्लो. ] **अप्राप्तव्यवहारं** न्यायकरणार्थमानीय ।

[ २४४ श्लो. ] **मानेन** प्रस्थादिना वृद्धौ हानौ अस्यैवाष्टांशस्य अधिके न्यूने च कृते युक्त्या कल्पितं दंडः दाप्यः ॥ २४४ ॥

[ २४५ श्लो. ] हीनद्रव्यं प्रक्षिप्य विक्रयं कुर्वतः षोडशपणान् दंड्यः ॥ २४५ ॥

---

अ–पाठः–नियोगमंतरेण **विधवागामी** म्रियमाणे गवादावुच्चैः क्रोशे कृते न धावति निमित्तं विनैव क्रोष्टा चंडालश्च ब्राह्मणादीन् स्पृशन् (२३४) ॥

शूद्रप्रव्रजितादीनां क्षपणकादीनां दैवपित्र्ये च भोजयिता स्वभार्यां प्रति यदि त्वा गच्छामि तदा मातरमभिगच्छामि इत्ययुक्तशपथकर्ता । अब्राह्मणो ब्राह्मणकर्तव्याध्ययनादेः कर्ता ( २३५ ) ॥

वृक्षाणां फलप्रतिबंधकारा छागादीनां पुंस्त्वप्रतिबंधकः । नानास्वामिकद्रव्यस्यापकर्ता । दासीगर्भस्यौषधादिना विनाशयिता ( २३६ ) ॥

पित्रादीनामपतितानां पोषणाद्यकरणात्त्यागवान् शतदंडभाक् ( २३७ ) ॥

1 अ–नं ।

[ २४६ श्लो. ] एषामापद्दृष्टजातीनां लोभादुत्कृष्टजातिकरणे गृहीतमूल्यादष्टगुणो दंडः । यथा मृदो मल्लिकामोदसंचारेण सुगंधामलकमित्याद्यूहनीयम् ॥ २४६ ॥

[ २४८ श्लो. ] संपुटस्य विपर्ययं कुर्वतः **सारभांडं** कुंकुमादि **कृत्रिमं** कृत्वा विक्रेतुर्**दंड-कल्पना** कार्या । कथं कार्येत्याह ।

न्यूने पणे पंचाशत्पणो दंडः। पूर्णे पणे शतं पणाः। द्विपणे शतद्वयम्। अतोऽतिरिक्तमूल्येऽतिरिक्तदंडः कार्यः ॥ २४८ ॥

[ २४९ श्लो. ] **संभूयेति** । राजानुमतिमंतरेण धान्यादेः पीडाकरमूल्यं कुर्वतां वणिजां **कारुशिल्पिनां** च राजकृतस्य मूल्यस्य हानिं **वृद्धिं** वा कुर्वतां सहस्रपरिमितो दंडः कार्यः। **कारुस्तंतुवायः** । **शिल्पी** चित्रकरः ॥ २४९ ॥

[ २५०–२५१ श्लो. ] **संभूयेति** । राजभिर्धान्यादेर्यन्मूल्यं **व्यवस्थाप्यते** तेनैव क्रयविक्रयश्च कार्यः। **निश्रवः** पण्यविक्रयेण यदुत्पन्नं मूलधनादधिकधनं स एव वणिजो लाभेऽल्पलाभः स्मृतः॥

[ २५२ श्लो. ] **स्वदेशेति**। स्वदेशगते पण्ये द्रव्ये वणिक् **शतं** प्रति **पंचकं** लाभं गृह्णीयात्। परदेशागते तु दशकं यदि **सद्यः** क्रयविक्रयो भवेद्विलंबिते त्वनियमः ॥ २५२ ॥

[ २५३ श्लो. ] **पण्यस्येति**। दूरदुर्गदेशादागते पण्ये तु यद्व्ययादिकं भूतं तेन सहस्रकल्पनया तन्मूल्यं कार्यं यथा क्रेतुर्विक्रेतुश्चापचयकारी न स्यात् ॥ २५३ ॥

## अथ विक्रीयासंप्रदानम् २१

[ २५४ श्लो. ] **गृहीतेत्यादि** । यो **गृहीतमूल्यं पण्यं क्रेतुर्न** ददाति स तन्मूल्यं वृद्धिसहितं क्रेतुर्**दाप्यः**। यदि तद्देशादागतं भवेत्। देशांतरगते तु तद्देशलाभसहितं दाप्यः। **विष्णुः**(५।१२६)—

" गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति। नैव दद्यात्। स तस्मै सोदयं दाप्यो राज्ञा तु पणशतं दंड्यः " ॥ २५४ ॥

[ २५५ श्लो. ] **विक्रीतमपि**[1] द्रव्यं पूर्वक्रेतरि अगृह्णति विक्रेयम्। यदि क्रेतृदोषेणापचयस्तदा क्रेतुरेव स इति ॥ २५५ ॥

[ २५६ श्लो. ] **राजेत्यादि**। राजदैववशात्पण्यदोषे जाते यस्तत्रापचयो भवति स क्रेतुरेव यदि याचमानस्य क्रेतुर्न दत्तं भवेत्। अर्थाद्दीयमानं यदि क्रेता न गृह्णाति तदा क्रेतुरेव ॥२५६॥

[ २५७ श्लो. ] **अन्येत्यादि**। अन्यहस्ते विक्रीतं पुनरन्यहस्ते विक्रीतं दुष्टमेवादुष्टवद्विक्रीयते तदा तद्द्रव्यमूल्यात् द्विगुणो दंडो भवेत् ॥ २५७ ॥

### अथ **क्रीतानुशयः**

[ २५८ श्लो. ] **क्षयमित्यादि**। क्षयं वृद्धिं च **पण्यानामविजानता वणिजा** क्रीता पश्चात्तापो न कार्यः । **अनुशयः** पश्चात्तापः । कुर्वन् क्रीतमूल्यद्रव्यस्य षड्भागदंडभाग्भवेत् । विशेषमाह **नारदः** ( ९।२–३ )—

"क्रीत्वा मूल्येन यः पण्यं दुष्क्रीतं मन्यते क्रयी। विक्रेतुः प्रतिदेयं तत् तस्मिन्नेवाह्न्यरक्षितम् ॥
"द्वितीयेऽह्नि ददत्क्रेता मूल्यात् त्रिंशांशमावहेत्। त्रिगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तत्" ॥

---

१ अ–विपरीतमपि ।

## अथ संभूयसमुत्थानम् २२

[ २५९ श्लो. ] **समेत्यादि** । मेलकेन लाभार्थं वणिज्यादि कुर्वतां वणिजां लाभापचयौ[1] यथाद्रव्यभागं वेदितव्यौ यथा वा पूर्वप्रतिज्ञातौ तथा प्रतिपत्तव्यौ ॥ २५९ ॥

[ २६० श्लो. ] **प्रतीत्यादि** । **प्रतिषिद्धमनादिष्टं** च कुर्वता अनवधानेन यद्रव्यं **नाशितं** स तन्नष्टं पूरयेत् । विप्लवात्तस्काराद्युपद्रवात्तस्कराच्च रक्षिताद्दशमं भागं गृह्णीयात् ॥ २६० ॥

[ २६१ श्लो. ] **अर्घेत्यादि** । मूल्यकरणाद्धेतो राजा तन्मूल्यस्य **विंशं भागं** विंशतिभागं शुल्कार्थं गृह्णीयात् । राज्ञा च यद्विक्रयार्थं प्रतिषिद्धं पण्यमसाधारण्येन च यद्राजयोग्यं श्वेतचामरादि तद्विक्रीतमपि राजकीयमेव भवेत् ॥ २६१ ॥

[ २६२ श्लो. ] **मिथ्येत्यादि** । शुल्कस्थाने लोभेन पण्यपरिमाणं **मिथ्या वदन् शुल्कस्थानाच्च** शुल्कमदत्वा अपगच्छन् यश्च विक्रयकाले राजवंचनार्थं छद्मना[2] अकाले क्रयं विक्रयं वा करोति सोऽपहृतद्रव्यापेक्षयाऽष्टगुणं दंडं दाप्यः । शुल्कस्थानमगत्वैव विवर्तमना[3]ऽन्यत्र गच्छति तदा सर्वापहारः । यथा **विष्णुः**—(३।१६) "शुल्कस्थानमपक्रम्य सर्वापहारमाप्नुयात् " ॥२६२॥

[ २६३ श्लो. ] **तरीत्यादि** । संतरणशुल्काधिकृतो जलग्राह्यशुल्कं स्थले **गृह्णन् दश पणान् दाप्यः** । सन्निहितान् ब्राह्मणान् भोजनप्रस्तावेऽनिमंत्रयन् तथैव दश पणान् दाप्यः ॥ २६३ ॥

[ २६४ श्लो. ] **देशेत्यादि** । संभूयकारिणां मध्ये कस्मिन्नपि देशांतरमृते तद्धनं तत्पुत्रादयः तदभावे पितृव्यादयः तदभावे ज्ञातयश्च तदभावे ब्राह्मणधनवर्जं नृपो गृह्णीयात् ॥ २६४ ॥

[ २६५ श्लो. ] **जिम्हमित्यादि** । **जिम्हं** वंचकं लाभमाच्छिद्य संभूयकारिणस्त्यजेयुः । भांडाद्यवेक्षणासमर्थो[4]ऽन्येन तत्कारयेत् ॥

वणिगुक्तविधिना ऋत्विजां कर्षकाणां शिल्पिनां विधाराख्यातः । ॥२६५॥

---

## अथ चौरान्वेषणम् २३

[ २६६ श्लो. ] **ग्राहकैरित्यादि** । **ग्राहकैः** पुरुषैः **चौरो**ऽयमिति निर्दिष्टः **लोप्त्रेण**[5] चौर्यलिंगेन **पदेन** नाशदेशादारभ्य चौरादिपदसंचारानुसारेण पूर्वकृतचौरकर्मप्रबंधोऽविशोधितनिवासस्थानश्चौरत्वेन **गृह्यते** ग्रहीतव्य इत्यर्थः ॥ २६६ ॥

[ २६७ श्लो. ] **अन्येऽपीत्यादि** । उक्तादन्येऽपि नामादिनिह्नवेन **चौरशंकया** ग्राह्याः । नामनिन्हवो नाहममुक इति । जातिनिन्हवो नाहं ब्राह्मण इति । आदिग्रहणाद्देशस्थानकुलादयो गृह्यंते । तथा द्यूताद्यासक्ताः । तथा ' कस्त्वं कुत आगतोऽसि ' इत्युक्ते **शुष्कमुखा भिन्नस्वरा** भवंति तेऽपि ग्राह्याः ॥ २६७ ॥

[ २६८ श्लो. ] **परेत्यादि** । परद्रव्याणां गृहाणां च **पृच्छका** गुप्तचारिणः । आयशून्या व्ययकारिणः । विनष्टस्य भग्नस्य कुंडलादेर्व्ययकारिणः शंकया ग्राह्याः ॥ २६८ ॥

[ २६९ श्लो. ] **गृहीत्यादि** । चौर इति शंकया गृहीतो यद्यात्मानं न शोधयेत् दृष्टेन अदृष्टेन वा न निर्णयेत् तदा हृतद्रव्यं **दापयित्वा** तं **चौरदण्डेन दण्डयेत्** ॥ २६९ ॥

---

१ अ—लाभव्ययौ । २ अ—व्याजं कृत्वा । ३ अ—वीथिना । ४ ब—णमशक्तो । ५ ब कर्मापराद्धां ।

[२७०श्लो.]चौरमित्यादि। **वधैर्वधोपायैर्वक्ष्यमाणैः सचिन्हं** स्वपदांकचिन्हसहितम्। **बृहन्मनुः**-
"अन्यायोपात्तवित्तत्वाद्धनमेषां मलात्मकम्। अतस्तान् घातयेद्राजा नार्थदंडेन दंडयेत्" ॥ २७० ॥

[ २७१ श्लो. ] **घातितेत्यादि**। ग्राममध्ये मनुष्यादौ **घातिते** गवादौ ह्वते **ग्रामभर्तुर्दोषः**। यदि तन्मनुष्यादिपदं ग्रामान्निर्गतं न दृश्येत। ग्रामात् बहिस्तु पथि **विवीतभर्तुः**। **अवीतके** विवीतव्यतिरिक्ते। क्षेत्रादौ चौररक्षादिनियुक्तस्य ॥ २७१ ॥

[ **२७२ श्लो.** ] **स्वसीम्नीत्यादि**। स्वसीमायां नष्टं ग्राम एव दद्यात्। **पदं वा यत्र गच्छति**। **बहिः** कृष्टात्कर्षणदेशादन्यत्र च यदपहृतं द्रव्यं तत्पंचग्राममिलिता दद्युः। सन्निधानापेक्षया दशग्रामी वेति विकल्पः ॥ २७२ ॥

[ **२७३ श्लो.** ] ये साहसिकाः प्राणनिरपेक्षं धनार्थं धनवतः पुरुषान् बंदिनो गृह्णन्ति तान् वाजि[1]कुंजरांश्च ये हरन्ति बलात्कारघातिनश्च तानेतान् शूलेन समारोपयेत् ॥ २७३ ॥

[ **२७४ श्लो.** ] **उत्क्षेपेत्यादि** । उत्क्षिप्य योऽपहरति स **उत्क्षेपकः**। पटांत[2]स्थितं स्वर्णादिकं[3] ग्रंथिभेदेन[4] यश्चोरयति स **ग्रंथिभेदकः**। तौ प्रथमापराधे करांगुष्ठ[5]तर्जनीहीनौ कार्यौ द्वितीयापराधे करपादैकहीनौ तृतीयापराधे वध्यावित्यर्थः। "तृतीये वधमर्हति" इति (९।२७७) **मनुवचनात्**॥२७४॥

[ **२७५ श्लो.** ] **क्षुद्रेत्यादि** । **क्षुद्रमध्यमहाद्रव्याणां** काष्ठभांडलवणगुडकर्पूरकुंकुमादीनां हरणे **सारतो** मूल्यात् कर्षतो देशकालादिकं च दंडे कर्मणि संचित्य दंडः कार्यः ॥ २७५ ॥

## अथ स्तेनातिदेशः

[**२७६ श्लो.**] भक्तेत्यादि। **भक्तमन्नम्**। **अवकाशो** निवासस्थानम्। **अग्निः** शीतापनोदनार्थः। उदकं तृषितस्य। **मंत्र उपदेशः**। **उपकरणं** चौर्यसाधनम्। **व्ययो** देशांतरद्रव्यहरणार्थं पाथेयदानम्। तानि चौरस्य मनुष्यादिहंतुर्वा बुद्धिपूर्वकं कृत्वा योऽवतिष्ठते तस्य उत्तमसाहसं दंडः।

**कात्यायनः**—
"क्रेतारश्चैव भांडानां प्रतिग्राहिण एव च। समदंडाः स्मृताः सर्वे ये च प्रच्छादयन्ति तान्" ॥२७६॥

[ **२७७ श्लो.** ] **शस्त्रेत्यादि** । शस्त्रघातेन गर्भपाते कृते उत्तमो दण्डः। उत्तमस्त्रीपुरुषप्रमापणे च उत्तमः अधमस्त्रीपुरुषप्रमापणेऽधमो दंडः ॥ २७७ ॥

[ **२७८ श्लो.** ] **विप्रेत्यादि**[6] । **विप्रदुष्टां** व्यभिचारिणीं स्त्रियं पुरुषं सेतुभेदकरं च शिलां बध्वा जले प्रवेशयेत् पुरुषं। स्त्री च यदि गर्भरहिता भवेत् ॥ २७८ ॥

[ **२७९ श्लो.** ] **विषेत्यादि** । विषंदा[7]माग्निदां च स्त्रियं पत्यादिव्यापादिनीं च छिन्नकर्णहस्तनासिकौष्ठीं कृत्वा तीक्ष्णशृंगैर्गोभिर्मारयेत् ॥ २७९ ॥

## अथ घातकान्वेषणम्

[ **२८० श्लो.** ] **अविज्ञेति** । **अविज्ञातहतस्य** पूर्ववृत्तं **कलहं** तदीयसुत**बांधवाः** शीघ्रं राजपुरुषेण **प्रष्टव्याः**। परपुरुषरताश्चास्य स्त्रियः पृथक् पृथक् प्रष्टव्याः ॥ २८० ॥

---

१ अ–वाजिकुंजराणां च हारिणो बलात्कारेण घातिनश्च। २ अ–पटप्रांतादि। ३ अ–दि द्रव्यं। ४ अ–मोक्षणेन। ५ अ–करसंबंधहीनकौ। ६ अ–'विप्रदुष्टां' इत्यत्र 'विषाग्निदां' इति कुत्रचित्पाठः। ७ ब–विषदमाग्निदं च पुरुषं स्त्रियमगर्भिणीमीदृशीं जले प्रवेशयेत्।

[ २८१ श्लो. ] **स्त्रीत्यादि**। स्त्रीकामो द्रव्यकामो वर्तनकामो **वाऽयं केन सह** वा गतो वा सा च स्त्री कस्येत्यादि तत्रस्थं जनं अन्वेष्टा राजपुरुषः शनैर्मधुरभाषा पृच्छेत्। **बृहस्पतिः** (२२।३४)—
"हतः संदृश्यते यत्र घातकस्तु न दृश्यते। पूर्ववैरानुमानेन ज्ञातव्यः स महीभुजा" ॥ २८१ ॥

[ २८२ श्लो. ] **क्षेत्रेत्यादि**। क्षेत्रादिदाहका राजभार्यागामिनः कटाग्निना दग्धव्याः। कटो वीरणादिनिर्मितः ॥ २८२ ॥

---

## अथ स्त्रीसंग्रहणम् २४

[ २८३ श्लो. ] **पुमान्**। परस्त्री**संग्रहणे** व्यभिचारे अन्योन्यकेशग्रहणेन **ग्राह्यः**। **सद्यो वा** कामोद्भवैर्द्वयोर्नखदंतक्षतदर्शनादिभिः स्त्रीपुंसयोः संप्रतिपत्त्या वेति ॥ २८३ ॥

[२८४ श्लो.] **नीवीत्यादि**। नीव्याद्याकर्षणं कुर्वाणः संग्रहे ग्रहीतव्यः। व्यक्तमपरम्। एतस्य भेदमाह **बृहस्पतिः** (२३।६-८)—
"अपांगप्रेक्षणं हास्यं दूतीसंप्रेषणं तथा। स्पर्शो भूषणवस्त्राणां प्रथमः संग्रहः स्मृतः ॥
"प्रेषणं गंधमाल्यानां फलमत्स्या[1]न्नवाससाम्। संभाषणं च रहसि मध्यमं संग्रहं विदुः ॥
"एकशय्यासनं क्रीडा चुंबनालिंगने तथा। एतत्संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः" ॥२८४॥

[ २८५ श्लो. ] **स्त्रीत्यादि**। पतिपित्रादिभिः संभाषणादि**निषेधे** कृते प्रवर्तमाना स्त्री पणशतं **दद्यात्**। पुरुषः पुनरी[2]दृशः प्रवर्तमानो शतद्वयम्। द्वयोश्च प्रतिषिद्धयोः प्रवर्तमानयोः संभोगे विहितो यो दंडः स कर्तव्यः। विशेषमाह **मनुः** ( ८।३६१ )—
"भिक्षुका बंदिनश्चैव दीक्षिताः कारवस्तथा। संभाषणं सह स्त्रीभिः कुर्युरप्रतिवारिताः" ॥२८५॥

**अथाभिगमनदंडः**

[ २८६ श्लो. ] **सजेत्यादि** । रक्षितसजातीया[3]कामपरस्त्रीगमने ब्राह्मणादीनामुत्तमसाहसो दंडः। पि[4]तृष्वस्रादिगमने वध एवेति वक्ष्यति तृतीयाध्याये ( प्रा. २३२ )। अरक्षितानुलोमगमने तु मध्यमः। तथा **मनुः** ( अ. ८ )—
"अगुप्ते क्षत्रियावैश्ये शूद्रां वा ब्राह्मणो व्रजन्। शतानि पंच दंडः स्यात्सहस्रं त्वंत्यजस्त्रियम्" ॥(३८५)
"सहस्रं ब्राह्मणो दंडं दाप्यो गुप्ते तु ते व्रजन्। शूद्रायां क्षत्रियविशोः साहस्रो वै भवेद्दमः॥ (३८४)
प्रतिलोमगमने तु शूद्रादीनां वधः स्त्रीणां कर्णनासादिकर्तनं कार्यम् ॥ २८६ ॥

**अथ कन्यादूषणम्**

[ २८७ श्लो. ] **कन्यामलंकृतां**। अनिच्छंतीमभिगमनार्थं हरन् उत्तमं साहसं दद्यात्। **अन्यथा** तु हरन् **अधमसाहसम्**। तच्च सजातीयासु। **प्रातिलोम्ये** तु हर्तुर्वध एव.॥ २८७ ॥

[२८८श्लो.] **सकामेत्यादि**। इच्छन्तीष्व**नुलोमासु** अभिगमनार्थं हरणे **न दोषः**। समानजातीयासु कन्यासु गमनवर्ज्यं अहंकारेणांगुलिप्रक्षेपमात्र**दूषणे** हस्तच्छेदः। **उत्तमायां वध** एव ॥२८८॥

[ २८९ श्लो. ] **शतमित्यादि**। स्त्रीणां विवाहसमये विद्यमानं दूषणं कथयन् शतं दाप्यः। अविद्यमानकथने शतद्वयं दाप्यः ॥ २८९ ॥

---

१ अ-सद्रंध। २ अ—रेवं। ३ ब—य। ४ अ—मातृ। ५ ब—दंडयो गृहे।

[ २९० श्लो. ] **अवेत्यादि** । परावरुद्धाक्षतदासीषु भोगानुमत्याऽवरुद्धासु सतीषु च आनुलोम्येन **गम्यास्वपि** गच्छन् पंचाशत्पणदंडं परिमितं दाप्यः ॥ २९० ॥

[ २९१ श्लो. ] **प्रसह्येत्यादि** । बलाद्दासीगमने दशपणः । तामेवानिच्छंतीं बहूनां गच्छतां प्रत्येकं चतुर्विंशतिपणपरिमितो दंडः ॥ २९१ ॥

[ २९३ श्लो. ] **अयोनावित्यादि** । अधोदेशादावयोनौ **गच्छतः** चतुर्विंशति । पुरुषे वा मैथुनं कुर्वतः गृहीतप्रव्रज्यां वा स्त्रियं गच्छतः चतुर्विंशतिपणपरिमितो दंडः ॥ २९३ ॥

[ २९४ श्लो. ] **अंत्याभिगमन** इति । अंते भवोऽन्त्यो यतोऽधमा शूद्रजातिर्नास्ति तस्याश्चांडाल्या गमने कबंधेनाशिरस्कनरशरीराकारेणांकयित्वा निःसारयेत् । शूद्रस्तु पूर्ववदंक्य एव । न निःसार्यः दंड्यश्च । अरक्षितद्विजातिस्त्रीगमने शूद्रस्य वध एव ॥ २९४ ॥

## अथ प्रकीर्णप्रकरणम् २५

[ २९५ श्लो. ] **ऊनमित्यादि** । यो राजादेशमूनमधिकं वा लिखति तस्य परदारेषु मैथुनं कुर्वतः चौरं च मुंचतः उत्तमो दंडो वेदितव्यः ॥ २९५ ॥

[ २९६ श्लो. ] **अभक्ष्येण** इत्यादि । अभक्ष्यैर्विष्ठादिभिर्ब्राह्मणदूषणे उत्तमसाहसं दंडः । व्यक्तमपरम् । यत्तु **विष्णुना** (५।९७)—" अभक्ष्येण ब्राह्मणस्य दूषयिता दश सुवर्णान् दंड्यः" इत्यादि दंडगौरवमुक्तं तत् लशुनाद्यभक्ष्यभक्षणरूपगुरुतरविषयम् ॥ २९६ ॥

[ २९७ श्लो. ] **कूटेत्यादि** । तथाविधवर्णापादनेन कल्पितसुवर्णस्य व्यवहारिणो निषिद्धपशुमांसस्य छागादिमांसाभिधानेन विहितत्वेन विक्रेतारः **त्र्यंगहीना** नासाकर्णकरैर्हीनाः कार्याः ॥ २९७ ॥

[ २९८ श्लो. ] **चतुष्पादेत्यादि** । बलीवर्दादिभिः परोपघाते अपैहीति प्रथमं भाषमाणस्य दण्डार्हतालक्षणो दोषो न भवति । काष्ठलोष्ठादिभिरभ्यासकरणेऽपि प्रथममपैहीति भाषमाणस्य च न भवति ॥ २९८ ॥

[ २९९ श्लो. ] **छिन्नेत्यादि** । नासायां भवं नस्यम् । शरीरावयवात् यत् छिन्ना नस्या बलीवर्दरज्जुर्यत्र याने तेन हिंसिते । तथैव भग्नयुगाख्यकाष्ठेन रथेन । आदिना चक्रादीनां ग्रहणम् । पश्चादपसरता हिंसिते स्वामी न दोषं भजते ॥ २९९ ॥

[ ३०० श्लो. ] **शक्तोपीति** । शृङ्गिणां बलीवर्दादीनां दंष्ट्रिणां च मर्कटादीनां समर्थोऽपि स्वामी तैर्भक्षिते तानमोचयन् प्रथमं साहसं दद्यात् । **विक्रुष्टे** अपसारय बलीवर्दं मर्कटं वा इत्युक्ते अमोचयन् **द्विगुणं दद्यात्** ॥ ३०० ॥

[ ३०१ श्लो. ] **जारमित्यादि** । कुलकलंकशंकया चौरोऽयं निर्गच्छतीति जारं ब्रुवन् पंचशतं दंड्यः । धनं गृहीत्वा जारं परित्यजन् तद्धनस्याष्टगुणं दाप्यः ॥ ३०१ ॥

[ ३०२ श्लो. ] **राज्ञ** इत्यादि । राज्ञोऽधिक्षेपस्य बहुजनसमक्षं वक्तारं राज्ञो निंदकं

---

१ ब-सा चेद्बहूनां दासी चानिच्छती तदा चतुर्विंशतिः पणाः । २ ब-शूद्र । ३ अ-आदिशब्दात् । ४ अ-उपजीवितधनमष्टगुणं ।

तन्मंत्रस्य च राज्यस्थैर्यहेतोर्भेत्तारं प्रकाशकं जिह्वां छित्वा निःसारयेत्। ब्राह्मणस्य तु निःसारणमात्रम् ॥ ३०२ ॥

[ ३०३ श्लो. ] मृतेत्यादि। मृतांगलग्नस्य वस्त्रादेर्विक्रेतुर्मध्यमसाहसं दंडः। गुरोस्ताडयितुस्तथा राजयानासनारोढुश्च ॥ ३०३ ॥

[३०४ श्लो.] द्विनेत्रेति। नेत्रद्वयभेदिनो राजद्विष्टमप्रीतिकरमादिशतः। शूद्रस्य च ब्राह्मणवेशेन जीविकां कुर्वतोऽष्टौ पणशतानि दंडः। यथा विष्णुः (५।७१-७२)—"उभयनेत्रभेदिनं राजा बंधनाद्यावज्जीवं न मुंचेत्। तादृशं वा कुर्यात्" ॥ ३०४ ॥

[ ३०५ श्लो. ] दुर्दृष्टेत्यादि। राज्ञा शास्त्रदृष्टान् व्यवहारान् पुनः शास्त्रज्ञैर्बहुभिर्ब्राह्मणैः सह दृष्ट्वाऽन्यथानिर्मिते नृपेण पूर्वसभ्या जयिना सह द्विगुणदंडेन पृथक् पृथक् दंडनीयाः। विशेषमाह नारदः ( व्य. मा. २।४० )—

"साक्षिसभ्यावसन्नानां दूषणं दर्शनं पुनः। स्वचर्यावसितानां च नोक्तः पौनर्भवो विधिः"॥ साक्षिसभ्यद्वारेणावसन्नानां साक्षिसभ्येषु दूषणे न पुनर्व्यवहारदर्शनम्। स्वचर्यावसितः परस्परविरुद्धभाषणादिना पराजितः। तथा च बृहस्पतिः—

"पलायनानुत्तरत्वादन्यपक्षाश्रयेण च। हीनस्य गृह्यते वादो न स्ववाक्योज्झितस्य च" ॥३०५॥

[ ३०६ श्लो. ] यो मन्येतेत्यादि। शास्त्रीयानिर्णयेन पराजितोऽपि मन्यते न मया हारितमिति स सभायां पुनर्जित्वा पूर्वस्वदंडात् द्विगुणं दंडं दाप्यः। तथा च नारदः ( १।६५ )— "तीरितं चानुशिष्टं च यो न मन्येत धर्मतः। द्विगुणं दंडमास्थाय तत्कार्यं पुनरुद्धरेत्" ॥ तीरितं समाप्तम्। अनुशिष्टं साक्षिभिरुक्तम्। पराजितो यो विषादिना आत्मानं घातयति। तत्राह बृहस्पतिः— "विषोद्बन्धनशस्त्रेण यश्चात्मानं प्रमापयेत्। मृतोऽमेध्येन लेप्तव्यो नान्यसंस्कारमर्हति" ॥३०६॥

[ ३०७ श्लो. ] राज्ञेत्यादि। अन्यायेन यो दण्डो राज्ञा गृहीतस्तं वरुणाय प्रथमं निवेद्य पश्चात् त्रिंशद्गुणीकृत्य ब्राह्मणेभ्यः स्वयं दद्यात् ॥ ३०७ ॥

व्यवहारदर्शने फलमाह मनुः ( ८।४२१ )—

" एवं सर्वानिमान् राजा व्यवहारान्समापयन्। व्यपोह्य कल्मषं सर्वं प्राप्नोति परमां गतिम्" ॥

दृष्ट्वेति शेषः। दंड्यानां फलमाह ( ८।३१९ )—

"राजभिर्धृतदंडास्तु कृत्वा पापानि मानवाः। निर्मलाः स्वर्गमायांति संतः सुकृतिनो यथा ॥

"एवमुन्धृतदंडानां विशुद्धं[3] पापकर्मणाम्। स्वधर्मस्थापनाद्राजा प्रजाभ्यो धर्ममश्नुते ॥

"यत्र दंडविधिर्नोक्तः सर्वैरेव महात्मभिः। देशकालादि संचिंत्य तत्र दण्डो विधीयते " ॥

इति शूलपाणिकृतायां याज्ञवल्क्यटीकायां द्वितीयोऽध्यायः।

---

१ अ–लु। २ 'दत्त' इत्यपरः पाठः। ३ द्विः।

# तृतीयोऽध्यायः

## अथ प्रायश्चित्ताध्यायः।

### आशौचप्रकरणम् १

[ १–२ श्लो. ] **ऊनेत्यादि**। असंपूर्णद्विवर्षं बालमकृतचूडं मृतं माल्यादिभिरलंकृत्य ग्रामाद्बहिः शुचौ भूमौ निखाय स्थापयेत्। अनन्तरमुदकदानं न कार्यम्। इति सकलप्रेतकृत्यनिषेधपरमिदम्।

**इतरः** संपूर्णद्विवर्ष उपनयनात्पूर्वं मृतो ज्ञातिभिर्मिलितै**र्यमसूक्तं** ' परेयिवांसम् ' (७।६।१४) इत्यादि **ऋग्वेदप्रसिद्धं यमगाथां** "नाके सुपर्णम्" (७।३।११) इत्यादि जपद्भिः श्मशानपर्यन्तमनुगन्तव्यः। ततो लौकिकाग्निना चाण्डालाद्यग्निव्यतिरेकेण दग्धव्यः। **उपेतश्चेदिति**। यद्युपनीतो भवेत्तदाहिताग्नेरितिकर्तव्यतया भूसंस्कारादिकया 'अस्मात्त्वमभिजातोऽसि' इत्यादिकमन्त्ररहितया तूष्णीं दग्धव्यः। **अर्थवदिति**। यावता अपसव्यत्वादिना प्रयोजनमस्ति तावतेति। अत्र "अजातदन्ता ये बाला ये च गर्भाद्विनिःसृताः। न तेषामग्निसंस्कारो नाऽऽशौचं नोदकक्रिया" (३।१६)॥

इति **पराशरवचनादू**नद्विवार्षिकस्य दन्तजन्मकालात् प्रभृति दाहादौ प्रेतोपकारो भवति। अकरणे प्रत्यवायाभावः। पूर्णद्विवर्षस्याकरणे प्रत्यवाय एव। यथा **मनुः** ( ५।७० )—

"नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया। जातदन्तस्य वा कुर्युर्नाम्नि वाऽपि कृते सति" ॥

अत्रिवर्षोऽप्राप्ततृतीयवर्षः ॥ १–२ ॥

[ ३ श्लो. ] **सप्तेत्यादि**। **ज्ञातयः** सपिण्डाः सप्तमपुरुषपर्यन्तम्। जीवत्पित्रादित्रिकस्य दशमपुरुषपर्यन्तं स्नानाद्यर्थं दक्षिणाभिमुखा जलं प्रविशन्ति। 'अप नः शोशुचत्' (१।७५) इत्यनेन वामहस्तानामिकया जलमालोड्य निमज्जेयुः। ' सव्याऽनामिकया जलमालोड्य अप नः शोशुचदघम् ' इति ( ३।१०।१९ ) **पारस्करदर्शनात्** ॥ ३ ॥

[ ४ श्लो. ] **एवमित्यादि**। एवमुक्तप्रकारेण। **मातामहादीनां** मृतानां उदकक्रिया कर्तव्या। **सखिप्रभृतीनां कामोदकं** इच्छया उदकं कार्यम्। **प्रत्ता** विवाहिता। **शंखलिखितौ**– " उदकक्रिया कामं श्वशुरमातुलयोः शिष्ये सहाध्यायिनि राजनि च " इति ॥ ४ ॥

[ ५ श्लो. ] **सकृदित्यादि**। एकवारमुदकाञ्जलिं ज्ञातयः 'अमुकगोत्र प्रेतामुकदेवशर्मन् एतत्ते तिलोदकं तृप्यस्व' इत्यादिना यथाशाखं वाग्यताः **सिञ्चन्ति**। त्रिःप्रसेक उपकारातिशयाय। तथा च **पैठीनसिः**–" मृतं मनसा ध्यायन् त्रीनुदकाञ्जलीन् निनयेत्। शावप्रभृत्येकादशाहे विरमेत् " इति। ज्ञातित्वेऽपि ब्रह्मचारिणः पतिताश्च न कुर्युः। मात्रादीनां तु कुर्युरेव। यथा **बौधायनः** (२।१।२४)–"ब्रह्मचारिणः शवकर्मणां व्रतान्निवृत्तिः। अन्यत्र मातापित्रोर्गुरोर्वा "॥५॥

[ ६ श्लो. ] **पाषण्डेत्यादि**। वेदबाह्यरक्तपटमौण्ड्यादिव्रतचर्या **पाषण्डम्**। तदाश्रिताः। **स्तेनाः**। सातत्येन **भर्तृवधकारिण्यः**। **कामगाः** स्वच्छन्देनानेकपुरुषगामिन्यः। आदिनार्भकगर्भघातिन्याद्याः। **सुराप्यो** द्विजस्त्रियः। अशास्त्रीयविषोद्बन्धनादिना कृतप्राणत्यागाः। एतेऽशौचतर्पणादिसकलप्रेतकृत्याधिकारा न भवन्ति। एतेषां न कर्तृत्वं न वा कर्मनियमत्वम् ॥ ६ ॥

[७श्लो.] **कृतेत्यादि**। कृततर्पणान् कोमलहरिततृणमयदेशोपरि स्थितान्। **स्नातानिति** तर्पणानन्तरं पुनः स्नानविधानार्थम्। **इतिहासैः** पौराणाख्यानैर्वक्ष्यमाणश्लोकैः शोकापनोदार्थं वदेयुः॥७॥

१ अ–म्य। २ ब–द्याः। ३ अ–नमू। ४ ब–द्वि। ५ अ–न्दाने–। ६ अ–आदिग्रहणाद्गर्भवधकारिणीप्रभृतयः। ७ ब–प्राणत्यागोद्यताः।

[ ८–११ श्लो. ] **मानुष्य** इत्यादि। **पञ्चे**त्यादि। **गंत्री**त्यादि। **श्लेष्मे**त्यादि। **पञ्चधा संभृतः** पृथिव्यप्तेजोवाय्वाकाशैरारब्ध **अवशो**ऽप्रभुः। ॥ ८–११ ॥

[ १२–१३ श्लो. ] इतीत्यादि। **आचम्ये**त्यादि। पूर्वोक्तशोकापनोदं श्रुत्वा कनिष्ठपुरःसरा गच्छेयुः। गृहद्वारि च निंबपत्रत्रयं दन्तैः खण्डयित्वाऽऽचम्याग्न्यादि स्पृष्ट्वा प्रस्तरे पादन्यासं विधाय त्वरया गृहं प्रविशेयुः। आदिग्रहणात् "दूर्वाप्रवालान् गोमयमग्निं वृषभं चालभ्य प्रविशन्तो घृतगौरसर्षपैर्मूर्द्धानमंगानि चालभेरन्" इति **शंखलिखितो**क्तं ग्राह्यम् ॥ १२–१३ ॥

[ १४ श्लो. ] **प्रवेशे**त्यादि। उक्तप्रवेशनादि कर्म यत् तत् **प्रेतसंस्पर्शिनामपि** कार्यम्। **परेषाम**सपिण्डानां **तत्क्षणात् शुद्धिमिच्छतां** तु स्नानात्प्राणायामाच्छुद्धिः। निर्हरणे तु **मनुः** ( ५।१०१–१०२ )—

"असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत्। विशुध्यति त्रिरात्रेण मातुराप्ताश्च बान्धवान् ॥
"यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति। अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत्" ॥

स्नेहाद्यनुबन्धादेकगृहवासे त्रिरात्रं भिन्नगृहवासे एकरात्रमशौचम्। मातुः सोदरभगिन्यादीन् निर्हृत्य भिन्नगृहवासेऽपि त्रिरात्रम्। तदन्नभोजने दशरात्रम् ॥ १४ ॥

[ १५ श्लो. ] **आचार्ये**त्यादि। आचार्यादीनां दाहदशाहे पिण्डषोडशश्राद्धादि सकलप्रेतकृत्यं च कृत्वा ब्रह्मचारी ब्रह्मचार्येव न लुप्तव्रतो भवतीत्यर्थः। एवं चान्यनिर्हरणे भवत्येव। **शकटान्नम**शौच्यन्नं तैराशौचिभिः ॥ १५ ॥

[ १६ श्लो. ] **क्रीते**त्यादि। यावदशौचं क्रीत्वा लब्ध्वा वाऽन्नं भुञ्जीरन्। न तु पूर्वावस्थितं तण्डुलादिकम्। **भूमौ** चैकाकिनः शयनं कुर्युः। मृताहात्प्रभृति दिनत्रयं यावदयमेकपूरकः पिण्डो देयः। पितृयज्ञावृता पिण्डपितृयज्ञेतिकर्तव्यतया तेन रेखाकरणदर्भास्तरणावनेजनप्रत्यवनेजनानि दर्शितानि ॥ १६ ॥

[ १७ श्लो. ] **जलमि**त्यादि। जलं दुग्धं चाकाशे शिक्यादौ प्रथमनिशायां **पारस्करो**क्तमंत्रेणोत्सृज्य स्थाप्यम्। यथा **पारस्करः** (३।१०।२७–२८)—"प्रेताय पिण्डं दत्वा अवनेजनप्रत्यवनेजने स्वनामग्राहं मृन्मये त्रिरात्रिं क्षीरोदके विहायस्थानि[1] दध्युः। प्रेतात्र स्नाहि पिब चेदं क्षीरमिति"। यत्तु **ब्रह्मपुराणे**—"तस्मान्निधेयमाकाशे दशरात्रं पयस्तथा" तत्प्रेतोपकारातिशयार्थम्। **वैतानं** श्रौताग्निकर्म। **उपासना** गृह्यादिकर्म। शुभाः क्रियाः प्रतिश्रुतदर्शनात् कार्याः। यथा **बौधायनेन**—"यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादि। "औपासने अहरहः स्वाहा कुर्यात्" इत्यादि।

अत्र कैश्चिद्वैताने दशरात्रं होमः स्वयं कर्तव्यः। आवसथ्ये तु अन्यगोत्रजेनेति। यथा **जाबालः**—

"जन्महानौ वितानस्य कर्मत्यागो न विद्यते। शालादौ केवलो होमः कार्य एवान्यगोत्रजैः" ॥

यथा **शंखलिखितौ**—"अग्निहोत्रार्थं स्नानोपस्पर्शनादेव पिता शुचिः"। यत्तु **दक्षवचनम्**—
"एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः। हीने हीनतरे चैव त्र्यहश्चतुरहस्तथा" ॥
एतत्सन्ध्यादिकर्मविषयं तदसंगतम्।

---

[1] 'विहायसि निदध्युः' इति मुद्रितपाठः।

"उभयत्र दशाहानि सपिण्डानामशौचकम् । स्नानोपस्पर्शनाभ्यासादग्निहोत्रार्थमर्हति"॥ इति जाबालवचनविरोधात् । स्नानाभ्यासादेकाहाद्युत्तरकालमित्यर्थः । यथा **संवर्तः**—
"होमस्तत्र तु कर्तव्यः शुष्कान्नेन फलेन वा ।
"पञ्चयज्ञविधानं च न कुर्यान्मृत्युजन्मनोः। दशाहात्तु परं सम्यक् विप्रोऽधीयीत धर्मवित्"॥

आभ्यां दशाहोत्तरकालं सन्ध्याकर्माध्ययनविधानात् । तस्माद्दक्षवचने होमार्थमशौचसंकोचः । न तु सन्ध्याकर्मार्थमिति । आदन्तेत्यादि। आदन्तजन्मादयः स्वकीयकालोपलक्षकाः । तेन षण्मासपर्यंतं बालमरणे सपिण्डानां किंचिन्निर्गुणानां सद्यःशौचम् । तदूर्ध्वं वर्षद्वयं यावत् अहोरात्रम् । तदुपरि प्रागुपनयनकालात् मासत्रयाधिकषड्वर्षं यावत्त्रिरात्रेण । उपनीते तु दशाहात् शुध्येयुर्बान्धवाः ॥ १७ ॥

[ १८ श्लो. ] त्रिरात्रमित्यादि । **शावमाशौचमस्पृश्यत्वलक्षणं** दशरात्राशौचिनाम् । एकस्मिन् मृतके द्वितीयमृतके समानदिनपतिते दशरात्रमस्पृश्यत्वम् । तथा **चादिपुराणे**—
"सर्वं गोत्रमसंस्पृश्यं तत्र स्यान्मृतके सति"। असमानदिनपतिते तु प्रथमे द्वितीयस्य शुध्यभिधानादूनद्विवर्षमरणलक्षणमस्पृशत्वं मातापित्रोरेव एतदन्तःसूतके । तथा च **पारस्करः**—
(३।१०।१-)"आद्विवर्षे प्रेते मातापित्रोरशौचं त्रिरात्रैकमन्तःसूचके चेदोत्थानादाशौचं सूतकवत्"। सूतकवदंगाशौचवदित्यर्थः।सूतकनिमित्तं त्वस्पृश्यत्वं दशरात्रं मातुरेव। तथा च **संवर्तः**—
"जाते पुत्रे पितुः स्नानं सचेलं तु विधीयते । माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः"॥१८॥

*[ २० श्लो. ] अन्तरेति ।

जननमध्ये यदि जननान्तरं मरणमध्ये यदि मरणान्तरं चेत्समानदिनव्याप्याद्यवृद्धिरहितं भवेत् तदा पूर्वजननमरणयोः शेषदिवसैः शुद्धिः। मरणोत्पत्तियोगे तु पूर्वभाविना पश्चाद्भाविना वा मरणेन शुद्धिः । "मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्" इति देवलवचनात् । तृतीयमासात्प्रभृति षष्ठमासपर्यन्तं गर्भस्रावे गर्भतुल्याहोरात्राणि शुद्धेः कारणम् । **यथादिपुराणे**—
"षण्मासाभ्यन्तरं यावद्गर्भस्रावो भवेद्यदि । तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥
"अत ऊर्ध्वं स्वजात्युक्तमशौचं तासु विद्यते । सद्यःशौचं सपिण्डानां गर्भस्य पतने सति"॥

प्रथमद्वितीयमासे तु स्त्रीणां त्रिरात्रं सपिण्डानां सद्यःशौचम् । यथा हारीतः—"गर्भपतने स्त्रीणां त्रिरात्रं साध्वीनां रजोविशेषत्वात्"॥

तथा **सुमन्तुः**—"गर्भमासतुल्या दिवसा गर्भसंस्रवे सद्यःशौचं वा" इति । गर्भमासतुल्याऽशौचं स्त्रीविषयं सद्यःशौचं सापिण्डविषयमिति व्यवस्थितविकल्पः । अपरो विशेषः स्मृत्यन्तरेऽनुसन्धेयः ॥ २० ॥

[ २१ श्लो. ] हतेत्यादि । विप्रादिहतानां ये सापिण्डास्तेषामन्वक्षं यावत् दृग्गोचरं तावदशौचं सद्यःशौचमित्यर्थः। **आत्मघातिनां** अविहितैर्विषोद्बन्धनादिना बुद्धिपूर्वं कृतप्राणित्यागिनां च । **प्रोषिते** देशान्तरस्थे मृते जाते वा दशाहाद्यशौचकालाभ्यन्तरे श्रुते दशाहादिशेषकालमशौचं स्यात् । अपरे विशेषाः स्मृत्यन्तरेऽनुसन्धेयाः । **पूर्णे** दशाहादौ स्नात्वा उदकं दत्वा शुचिः ।

*[ १९ अंकित श्लोकः शूलपाणिना २९-३० श्लोकयोर्मध्ये पठितः ]

१ ब-सूतके । २ ब-चेदोत्थानिकात् । ३ ब-पाठः । ४ ब-रात्रौ शुद्धिः । ५ ब-पाठः ।

एतच्चैकाहाशौचिनाम् । " अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् " इति ( ५।७५ ) **मनुना** दशाहाशौचिनां त्र्यहाशौचविधानात् ॥ २१ ॥

[ २२ श्लो. ] क्षत्रेत्यादि । उपनीतसपिण्डमरणे संपूर्णकालिकाशौचिजनने च वृत्तस्वाध्यायादिरहितक्षत्रियादेः क्रमेण द्वादशाहाद्यशौचम् । शूद्रस्योपनयनस्थाने विवाहः । पाकयज्ञादिद्विजशुश्रूषादिवर्तितस्तदर्द्धम् । तथा च **मनुः** ( ५।१३९ )—

"शूद्राणां मासिकं कार्यं वपनं न्यायवर्तिनाम् । वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टं च भोजनम्"॥२१॥

[ २४ श्लो. ] अहस्त्वित्यादि । **कन्यासु** द्विवर्षादूर्ध्वं मृतासु अकृतवाग्दानासु सपिण्डानामेकाहमशौचम् । तथा **चादिपुराणे**—

"आ जन्मनस्तु चूडान्तं यत्र कन्या विपद्यते । सद्यःशौचं भवेत्तत्र सर्ववर्णेषु नित्यशः ॥
"ततो वाग्दानपर्यन्तं यावदेकाहमेव तु । अतःपरं प्रवृद्धानां त्रिरात्रमिति निश्चयः ॥
"वाक्प्रदाने कृते तत्र ज्ञेयं चोभयतस्त्र्यहम् । पितुर्वरस्य च ततो दत्तानां भर्तुरेव हि ॥
"स्वजात्युक्तमशौचं स्यात्सूतके मृतकेऽपि वा । बालेष्वजातदन्तेषु निर्गुणेषु त्वहः स्मृतम्"॥२३॥
निर्गुणसपिण्डानामहोरात्रं सद्यःशौचं तु किंचिन्निर्गुणानामुक्तम् ।

**गुरु**रत्रोपाध्यायो वेदाङ्गव्याख्याता च । **अन्तेवासी** अन्योपनीतो वेदैकदेशमध्यापितः **अनूचानो**ऽधीतवेदः प्रवचनसंबद्धश्च । **मातुलो** मातुः सोदरो भ्राता । **श्रोत्रियः** शाखैकाध्यायी यः समीपवर्ती न भवति । समीपवर्तिनि तु त्रिरात्रम् । यथा **मनुः** ( ५।८० ) " श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत् " इति ॥ २४ ॥

[ २५ श्लो. ] **अनौरसे**त्यादि । अपकृष्टजातीयेषु कृतकादिपुत्रेषु भार्यासु अपकृष्टजातीयासु पुरुषान्तरसंगृहीतासु मृतासु दिनमेकमशौचम् । समानजातीयासु त्रिरात्रम् । समानजातीयेषु कृतकादिपुत्रेषु च मुन्यन्तरे त्रिरात्रदर्शनात् । यस्य निवेशने ब्राह्मणा निवसन्ति तस्मिन् कृताभिषेके राजनि मृते दिनमेकमेवाऽशौचं ब्राह्मणादेः ॥ २५ ॥

*[ २६ श्लो. ] ब्राह्मेत्यादि । कथं[3] च नेति प्रासंगिकमपि शूद्रशवानुगमनं ब्राह्मणेन न कार्यम् । प्रमादात् कृते स्नात्वा घृतं प्राश्य शुचिर्भवेत् ॥ २६ ॥

[ २७ श्लो. ] **मही**त्यादि । राज्ञां व्यवहारदर्शनकर्मणि **नाशौचम्**। **विद्युता वज्रेण वा हतानां** बुद्धिपूर्वं गोब्राह्मणरक्षार्थं विनापि युद्धं व्याघ्रादिहतानां **संग्रामे** लगुडादिव्यतिरिक्तैः खड्गादिशस्त्रैः सन्मुखहतानां यस्य ब्राह्मणादेः कार्यसिध्यर्थं नृपतिरशौचाभावमिच्छति तस्यापि सद्यःशौचम् ॥२७॥

[ २८–२९ श्लो. ] **ऋत्विजा**मित्यादि । **दान** इत्यादि । **यज्ञे** सोमयागे । मधुपर्कोत्तरकालं स्वीयसपिण्डादिजननमरणे यज्ञानुष्ठानार्थं सद्यःशौचम् । सोमयागे दीक्षणीयेष्टौ कृतायां उत्तरकालं यजमानस्य स्वकर्मण्यनुष्ठेये नित्यप्रवृत्तान्नसत्रिणामन्नदाने चान्द्रायणादिव्रतप्रवृत्तानां तदनुष्ठाने ब्रह्मचारिणः स्वाश्रमकर्मणि प्रत्यहं गोहिरण्यादिदानप्रवृत्तानां तद्दाने ब्रह्मज्ञाने प्राप्तप्रकर्षाणां स्वकर्मानुष्ठाने कदाचित्तुलापुरुषादिदाने प्रक्रान्ते विवाहे च प्रक्रान्ते तत् क्रियार्थं यज्ञे च प्रक्रान्ते दीक्षणीयत्वात्पूर्वं सोमक्रयोत्तरकालं च दीक्षितान्नभक्षणे संग्रामे परचक्रादिना देशोपद्रवे तथौपसर्गिकात्यन्तनरकपीडायां सद्यःशौचम् ॥ २९ ॥

---

* अयं श्लोकः **शूलपाणिना** २७ श्लोकानन्तरं पठितः ।

१ ब–क्रियारत–। २ ब–देशे । ३ ब–शूद्रः शूद्राशिरःप्रमादात्कृते एवं शुद्धिः । बुद्धिपूर्वस्तु **पराशरः** ( ३।५१ ) " प्रेतीभूतं यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः । अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् " ॥ ४ ब–तदुत्तरं । ५ ब–स्तीनां । ६ ब–कर्मानुष्ठाने । ७ ब–पाठः । ८ ब–भक्तौते तस्य दाने । ९ अ–यामतः पूर्वं । १० ब–भोजने । ११ ब–दीनां । १२ ब–प्लवे । १३ ब–मरण ।

[ २९ श्लो.* ] **पित्रोरित्यादि**। मरणनिमित्तकमस्पृश्यत्वलक्षणमशौचं सर्वेषामेव सपिण्डानां सूतकनिमित्तं तु मातापित्रोरेव। तदपि **मातुरूर्ध्वं** दशरात्रम्। तदनंतरजोदर्शनात्। अत एव **वशिष्ठः** ( ४।२३ )–

"नाऽशौचं सूतके पुंसः संसर्गं चेन्न गच्छति। रजस्तत्राशुचि भवेत्तच्चं पुंसि न विद्यते"॥

तदीयगोधान्यादिप्रतिग्रहे तद्दिनं न दुष्यति। कुतः **पूर्वेषां** पित्रादीनां देवतारूपाणां जननात्। तथा **शंखलिखितौ**–

"पिता पितामहश्चैव तथैव प्रपितामहः। भूयस्तत्रैव जायन्ते तदहर्वैदयन्ति च"॥

'सूतकं मातुरेव हि' इत्युक्तमपि हेतुतो दृढीकृतम्॥ २९॥

[ ३० श्लो. ] **उदेत्यादि**। रजस्वलयाऽशौचिभिश्च सूतिकाचण्डालादिभिश्च **स्पृष्टः स्नायात्। तै** रजस्वलादिस्पृष्टैर्दण्डादिना **स्पृष्ट** आचामेत्। **अब्लिंगानि** आपो हि ष्ठादीनि। सावित्रीं मनसैकवारं जपेत्। साक्षात्स्पर्शे तु स्नायात्। साक्षात्स्पृष्टे स्नानमेवाह **मनुः** ( ५।८४ )—

"दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा। शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानं समाचरेत्"॥

तत्स्पृष्टिन इति सांनिध्यात् शवसर्ममिति केचित्।

अन्ये तु तच्छब्देन सन्निधानात् शवस्यैव परामर्शः शवस्पृष्टिस्पर्श एव स्नानमिच्छन्ति॥३०॥

[ ३१ श्लो. ] **काल** इत्यादि। **कालो** दशाहादिर्ब्राह्मणानाम्। **अग्निः** पुनःपाकरूपो मृन्मयानाम्। **कर्म** अश्वमेधादि ब्रह्महादीनाम्। **मृत्तिका** चाशुचिलिप्तानाम्। **वायुः** रथ्याँकर्दमतोयानाम्। **मनः** संकल्पविकल्पात्मकं विचिकित्सितानाम्। यथा 'मनःपूतं समाचरेत्' ( मनु. ६।४६ )। **ज्ञानं** ब्रह्मविषयं बुद्धिरूपान्तःकरणस्य। **तपश्चा**न्द्रायणादि। पापकृतां **पश्चात्तापश्च** अनाहार उपवासादिः। पापकारिणामेते **शुद्धिहेतवः**॥ ३१॥

[ ३२ श्लो. ] **अकार्येति**। अकार्यकारिणो **दानम्**। **नदीः** श्लेष्मादिदूषिता वेगेन। मलाद्युपहतं शोभनीयं मृत्तोयैः। ब्राह्मणाश्च संन्यासेन पापात् शुध्यन्ति॥ ३२॥

[ ३३ श्लो. ] **तप** इत्यादि। **वेदविदां तपो** वेदाभ्यासोऽज्ञानकृतपापस्य शुद्धिकरणम्। **क्षान्तिरपकृतेऽप्यपकारबुध्यनुत्पत्तिः। विदुषामात्मविदां शुद्धिहेतुः**। वर्ष्मणामंगानां स्वेदाद्युपहतानां **जलक्षालनम्**। अप्रख्यातपापानां गायत्र्यादि**जपः**। **मनसश्च** निषिद्धचिन्तादूषितस्य सत्याभिधानम्॥ ३३॥

[ ३४ श्लो. ] **भूतेत्यादि**। **भूतात्मनः** शरीरस्य **तपोविद्ये**। उपवासादि वेदाभ्यासौ। **बुद्धेश्चा**ध्यवसायलक्षणाया विपर्ययज्ञानोपहताया यथार्थज्ञानेन नैर्मल्यम्। **क्षेत्रज्ञस्य** जीवात्मनः परमात्मस्वरूपे**श्वरज्ञानात्** प्रकृष्टा **शुद्धिः**॥ ३४॥ **इत्याशौचप्रकरणम्**॥ १॥

## अथापद्धर्मप्रकरणम् २

[ ३५ श्लो. ] **अथापद्वृत्तिः। क्षात्रेणेत्यादि**। **आपदि** याजनादिना जीवितुमशक्नुवन् क्षत्रकर्मणा शस्त्रधारणेन जीवेत्। तेनाप्यजीवन् वैश्यकर्मणा कृष्यादिना न तु शूद्रवृत्त्या।

---

* अयं श्लोकः याज्ञवल्क्यस्मृतेः प्रसिद्धपुस्तकेषु १९ इत्यंकितः **शूलपाणिना** तु 'दाने विवाहे' इ. २९ अंकितश्लोकानन्तरं 'उदक्याशुचिभिः' इ. ३० अंकितश्लोकात्पूर्वं एतयोर्मध्ये पठितः।

१ **ब**–कुतः। २ **अ**–तु। ३ **ब**–रूपत्वेन। ४ **अ**–वैज। ५ **अ**–ऐर्द। ६ **ब**–मन्यथति। ७ **अ**–र्थात्।

तथा **नारदः** ( १।५३ )–

"आपद्यनन्तरा वृत्तिर्ब्राह्मणस्य विधीयते । वैश्यवृत्तिस्ततश्चोक्ता न जघन्या कदाचन" ॥

**तामापदं निस्तीर्य** प्रायश्चित्ताचरणेनात्मानं **पावयित्वा पथि** स्ववृत्तौ स्थापयेत्। क्वचित् 'निस्तीर्यार्थं समुत्सृज्य पाव्यात्मानं भवेत्पथि' इति पाठः ॥ ३५ ॥

[ ३६ श्लो. ] **फल** इत्यादि । **उपलः** पाषाणः पद्मरागादिः । **क्षौम**मतसीसूत्रनिर्मितम् । **सोमः** सोमलता । **रसो**ऽत्र माधुर्यादि । प्रधानानि द्रव्याणि गुडादीनि । **क्षारो** यवक्षारादयः । एतान् 'न विक्रीणीत' इति वक्ष्यमाणेन सम्बन्धः ॥ ३६ ॥

[ ३७ श्लो. ] **शस्त्रे**त्यादि । आसवं मद्यम् । **मधूच्छिष्टं** सिक्थकम् । **सबर्हिषः** कुशसहिताः । **कुतपो** नेपालकंबलः । **केश**श्चामरादिः ॥ ३७ ॥

[ ३८ श्लो. ] **कौशेये**त्यादि । कौशेयं त्रसरादिसूत्रम् । रसत्वेन निषेधे सिद्धे पुनर्लवणनिषेधो दोषातिशयज्ञापनार्थः । **एकशफा** अश्वादयः । **ओषधिः** फलपाकान्ता । **पिण्याका**स्तिलकल्कः । **गन्धः** कुंकुमादि ॥ ३८ ॥

[ ३९ श्लो. ] **वैश्ये**त्यादि । एतानि फलादीनि आपद्यपि **नो विक्रीणीत** ।

**धर्मार्थं** धान्यसाध्यवैश्यकर्मसिध्द्यर्थं भेषजाद्यर्थं च तिला धान्यसमा विक्रेयाः । तथा **नारदः** ( १–६६ )—

"अशक्तौ भेषजस्यार्थे यज्ञहेतोस्तथैव च। यद्यवश्यं तु विक्रेयास्तिला धान्येन तत्समाः"॥३८॥

[ ४० श्लो. ] **लाक्षे**त्यादि । लाक्षादीनि द्विजातिकर्मभ्यो हानिकराणि क्षीरादीनि शूद्रत्वापादकानि ॥ ३९ ॥

[ ४१ श्लो. ] **आपदि**त्यादि । आपदं प्राप्तो **यतस्ततः** पतितेतरस्मात्प्रतिगृह्णन्नन्नाभावात् प्राणसंशयं प्राप्तो निन्दितस्याप्यन्नं भुञ्जानो न पापेन लिप्येत । यस्मात्पापेन्धनदाहकत्वा**ज्ज्वलनार्कसमः स** इति ॥ ४० ॥

[ ४२ श्लो. ] **कृषि**रित्यादि । **शिल्पं** चित्रादिकर्म । **विद्या** वेदव्यतिरिक्ता गारुडादिविद्या । **शकटं** धान्यादिवहनद्वारेण । **गिरि**र्गैरिकाद्याहरणेन । **अनूपं** शालूकमूलाद्याहरणेन । **भिक्षा** व्याध्याद्युपहतस्य एकार्थव्यतिरेकेण ॥ ४२ ॥

[ ४३–४४ श्लो. ] **बुभुक्षित** इत्यादि। **तस्योक्तस्य** कुलादिकं **ज्ञात्वा** धर्मादनपेतां वृत्तिं **राजा प्रकल्पयेत्** ॥ ४३–४४ ॥ **इत्यापद्धर्मम्** ॥ २ ॥

## अथ वानप्रस्थ्यम् ३

[ ४५ श्लो. ] **सुते**त्यादि । आश्रमसमुच्चयपक्षाश्रितो द्विजातिर्वनवासमनिच्छन्तीं भार्यां पुत्रेषु समर्प्य इच्छन्त्या सहैव वा ऊर्ध्वरेता वैतानाग्निसहितो गृह्याग्निसहितो वनं गच्छेत् ॥४५॥

[ ४६ श्लो. ] **अफाले**त्यादि । **अफालकृष्ट**मकृष्टोत्थं नीवारादि । "जटाश्च बिभृयान्नित्यं श्मश्रुलोमनखानि च" इति ( ६।६ ) **मनु**वचनान्नखानपि धारयेत् ॥ ४६ ॥

[ ४७ श्लो. ] **अह्न** इत्यादि । एकाहादिनिर्वाहोचितं संचयं यज्ञार्थं च कुर्यात् । **कृतं** संस्कारावशिष्टमाश्विने त्यजेत् ॥ ४७ ॥

---

१ अ–रुद्रं ।

[ ४८ श्लो. ] **दान्त** इत्यादि । **दान्तः** शीतातपादिदुःखसहिष्णुः । **त्रिषवणस्नायी** संध्यात्रयस्नायी । स्पष्टमन्यत् ॥ ४८ ॥

[ ४९ श्लो. ] **दन्तोलूखलिक** इत्यादि । दन्ता एव उलूखलस्थाने यस्य स तथाविधः स्यात् । **फलस्नेहैः**रिंगुदमधूकादिफलस्नेहैः स्नानं कर्णाभ्यंगादिक्रियाश्च कुर्यात् ॥ ४९ ॥

[ ५० श्लो. ] **चान्द्रे**त्यादि । **कृच्छ्रैः** प्राजापत्यादिभिः । स्पष्टमन्यत् ॥ ५० ॥

[ ५१ श्लो. ] **शुचिरि**त्यादि । **भूमौ** न खट्वादौ । **प्रपदैः** पादाग्राभ्यां दिवसं तिष्ठेत् । स्थानासनाभ्यामिति किंचित् कालं स्थित एव स्यात् । किंचिदुपविष्ट एव । न त्वन्तरा पर्यटेत् । आवश्यकस्नानादिकालं विहाय नियमः ॥ ५१ ॥

[ ५२ श्लो. ] **ग्रीष्म** इत्यादि । ऋतुसंवत्सराश्रयणेन सांवत्सरिक एवाऽयं नियमः ॥ ५२ ॥

[ ५३ श्लो. ] **य** इत्यादि । **यः कण्टकै**र्व्यथयति तस्याऽक्रुद्धः स्यात् । **यश्चन्दनै**र्लेपयति तस्यापि न तुष्टो भवेत् । एवं तयोः सममतिः स्यात् ॥ ५३ ॥

[ ५४ श्लो. ] **अग्नीनि**त्यादि । यदाग्निपरिहरणासमर्थः तदा षण्मासोपरि वैखानसशास्त्रविधिना अग्नीनात्मनि समारोप्य प्राणधारणार्थं भैक्षमाहरेत् ॥ ५४ ॥

[ ५५ श्लो. ] **ग्रामादि**त्यादि । ग्रामादाहृत्य चाष्टौ ग्रासान् भुञ्जीत । अचिकित्स्यव्याध्युपहतो वाय्वाहार ऐशानीं दिशमा शरीरपाताद्गच्छेत् ॥ ५५ ॥

## अथ यत्याश्रमः ४

[ ५६–५७ श्लो. ] **अधीते**त्यादि । **वना**दित्याश्रमसमुच्चयपक्षे । **गृहादि**ति विकल्पपक्षे । तथा **जाबालः**—" ब्रह्मचर्यं परिसमाप्य गृही भवेत् । गृही भूत्वा वनी भवेत् । वनी भूत्वा प्रव्रजेदिति चेतरथा ब्रह्मचर्यादेव प्रव्रजेत्" इत्याह । **वनाद्गृहाद्वा** इत्यादि । यजुर्वेदोक्तां सर्वस्वदक्षिणां प्राजापत्येष्टिं कृत्वा तत्रान्ते यजुर्वेदविधिनैवात्मन्यग्नीन्समारोप्य **अधीतवेदो** गायत्री**जपकृत्** कृतपुत्रोत्पादः कृतान्नदानः श्रौतस्मार्ताग्निर्यथाशक्तिकृतज्योतिष्टोमादि**र्मोक्षे** मोक्षप्रधाने प्रव्रज्याश्रमे मनो योजयेत् । अत्र ब्राह्मणस्यैवाधिकारः । यथा **मनुः** ( ६।१७ )—"आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् " इति ।

यदन्यत्र द्विजग्रहणं तद्ब्राह्मणोपलक्षणार्थम् । यत्तु ' ब्राह्मणः क्षत्रियो वैश्यो वा प्रव्रजेद्गृहात् ' इति **विश्वरूपेण** लिखितं तदृषीणामशून्यमनाकरम् ॥ ५६-५७ ॥

[ ५८ श्लो. ] **सर्वे**त्यादि । **शान्तो** रागद्वेषादिरहितः । **त्रिदण्डी** वैणवदण्डत्रयसहितः । तथा च **नरसिंहपुराणे**—

"त्रिदण्डं वैणवं सौम्यं सत्वचं समपर्वकम् । वेष्टितं कृष्णगोवालरज्वा च चतुरङ्गुलम् ॥

" ग्रन्थिभिर्वा त्रिभिर्युक्तं जलपूतेन चोपरि । गृह्णीयाद्दक्षिणे हस्ते मन्त्रेणैव तु मन्त्रवित् "॥

एक एवारामेत्यसहाय इत्यर्थः । परिव्रज्यभिक्षार्थमेव ग्राममाश्रयेत् ॥ ५८ ॥

[ ५९ श्लो. ] **अप्रमत्त** इत्यादि । **सायाह्ने** दिनशेषमुहूर्तत्रये । कुलज्ञानादिना अविदितात्मस्वरूपो भिक्षां चरेत् । **भिक्षुकैरिति** पक्षिकुक्कुराद्युपलक्षणम् । **यात्रा** प्राणस्थितिस्तावन्मात्रं यथा भवति तथा चरेत् । **अलोलुपः** प्रचुरभिक्षेच्छारहितः ॥ ५९ ॥

[ ६० श्लो. ] **यतीत्यादि** । ऋज्वर्थम् । अभावे पर्णमयान्यपि । न तु तैजसानि । यथा **यमः**– "सुवर्णरौप्यपात्रेषु ताम्रकांस्यमयेषु च । भिक्षादातुर्न धर्मोऽस्ति ग्रहीता नरकं व्रजेत्" ॥६०॥

[ ६१ श्लो. ] **संनिरुध्येदित्यादि** । **भयं** हिंसादिरूपम् । **अमृतीभवति** मुक्तो भवति ॥६१॥

[ ६२ श्लो. ] **कर्तव्येत्यादि** । सर्वैरेवाश्रमिभिर्मनसः शुद्धिः कार्या । **विशेषतो भिक्षुकेण** । ब्रह्मज्ञानोत्पत्तेस्तदधीनत्वात् । **स्वातन्त्र्यकरणाय च** । अस्वातंत्र्ये हि विषयायत्तत्वे चित्तस्थैर्यं न स्यात् ॥ ६२ ॥

[ ६३–६४ श्लो. ] अवेक्ष्येत्यादि । **भव** इत्यादि । **गर्भवासो** दुःखबहुलः । **कर्मजा गतयो** मनुष्यपश्वादिदेहावाप्तयः । **प्रियाप्रियविपर्ययः** इष्टपुत्रादिवियोगः । अनिष्टहिंसकादिसंयोगः । एतत्सर्वं दुःखहेतुत्वेनावेक्ष्यम् । ततश्चैतद् दुःखाजिहासुना ध्यानयोगेन परमात्मा सूक्ष्मेण निरवयवो जीवात्मनि स्थितः संदृश्यो द्रष्टव्यः ॥ ६३–६४ ॥

[ ६५ श्लो. ] **नाश्रम** इत्यादि । यत्याश्रमविहितत्रिदण्डधारणमात्रं न धर्मकारणं किं तु यथा विध्यनुष्ठीयमानो हि स भवेत् । अत आश्रमधर्मलिङ्गरहितोऽपि धर्मार्थी यदात्मनो दुःखकारणं हिंसादि तत् परस्य नाचरेत् । किं तु सर्वभूतेषु ब्रह्मबुद्ध्या समदृष्टिः स्यात् । एतच्च धर्मप्राधान्यबोधनायोक्तं न लिंगपरित्यागार्थम् ॥ ६५ ॥

[ ६६ श्लो. ] **सत्यमित्यादि** । **धीः** शास्त्रोदिततत्त्वज्ञानम् । **दमः** 'मनसो दमनं दमः' इति **मनुनोक्तः** । 'शीतातपदुःखसहिष्णुता दम' इति **गोविन्दराजः** । **संयतेन्द्रियता** विषयेभ्यश्चक्षुरादिवारणम् । **विद्या** आत्मज्ञानम् । एतादृशविधं धर्मस्य कारणमुक्तम् ॥ ६६ ॥

[ ६७ श्लो. ] अथ जीवब्रह्मात्मस्वभावः । **निःसरन्तीत्यादि** । यथा ध्मायमानलोहपिण्डात् स्फुलिंगा निःसरन्ति तथा परमात्मनः सकाशात् शुभाशुभकर्मवशेन स्थूलशरीराभिमानिनो जीवा जायन्ते । एवं दीपाद्दीपान्तरोत्पादनवन्न परमात्मनोऽपचयो नापि शक्तिक्षयो नाप्येकान्तभेदः । तथा च **ब्रह्मपुराणे**—

"एकस्मादेव चैतन्याज्जाताः क्षेत्रज्ञजातयः । लौहाज्वलनसंदीप्ता मरीचय इवोद्गताः" ॥६७॥

[ ६८ श्लो. ] स जीवात्मा हिताहितपरिहारार्थी स्वातन्त्र्येण किञ्चित् करोति किञ्चित् स्वभावतो जात्युपाधिवशेन । यथोष्ट्रस्य कण्टकाशनशीलता । अभ्यासवशेन किंचिद्दानाध्ययनादि ॥ ६८ ॥

[ ६९ श्लो. ] **निमित्तमित्यादि** । **निमित्तं** सर्वेषाम् । **अक्षरमविनाशि** । **कर्त्ता** कर्मणां **बोद्धा** विषयाणां **ब्रह्म** निरतिशयानन्दस्वरूपः । **गुणी** शक्तिद्वारेण गन्धादिगुणयोगी । **वशी** स्वतंत्रः । अतो जन्मरहितः । यद्यप्येवंरूपः परमात्मा तथापि शरीरसंबन्धात् **जात इति कथ्यते** । यथा 'गृहस्थो जात' इति ॥ ६९ ॥

[ ७० श्लो. ] **सर्गेत्यादि** । यथा परमात्मा सृष्ट्यादावकाशादीन् शब्दादिनैकगुणादिकान् सृजति तथा स्वयमपि शरीरी भवन् स्वशरीरोत्पत्तये तान् गृह्णाति ॥ ७० ॥

[ ७१ श्लो. ] **आहुत्येत्यादि** । आहुत्यादिक्रमेण शुक्रोत्पत्तिः । तदिमन्नमन्नात् श्लेष्मा । एतमेवार्थमग्रे प्रपञ्चयिष्यते ॥ ७१ ॥

[ ७२ श्लो. ] स्त्रीपुंसेत्यादि । विशुद्धे वातायनाभिभूते शुक्रशोणिते पञ्चधातून् पञ्चभूतानि च एककालमीश्वरः स्वयं षष्ठो **आदत्ते** गृह्णाति । तत् क्षणमेव वायुना प्रेर्यमाणगर्भाशये तिष्ठति । स्वयमपि तत्रैव तिष्ठति ॥ ७२ ॥

[ ७३–७४ श्लो. ] इन्द्रियेत्यादि । प्रयत्न इत्यादि । धारणं मेधा । प्रेरणमिन्द्रियादीनां **अहंकारो**ऽहमित्यभिमानाख्यकार्यस्य हेतुः । **वर्णो** गौरादिः । **स्वरो** मधुरादिः । **भवो** धनपुत्रादिसंपत्तिः । अभवस्तद्विपर्ययः । तस्यानादेरात्मन उत्पत्तिमिच्छतः । एतदात्मजमेवोत्पत्तिसमय एव सूक्ष्मरूपतया संबध्यते ॥ ७३-७४ ॥

[ ७५ श्लो. ] प्रथमेत्यादि । शुक्रशोणितसन्निपातरूपो गर्भः **प्रथमे मासि** पृथिव्यादिपञ्चभूतविमूर्च्छितो मिलितः क्लेदभूतः सकलस्वभाव एवावतिष्ठते । **द्वितीये** शीतानिलैः पच्यमानो घनोऽर्बुदवत् कठिनं भवति । **तृतीये** तु हस्तद्वयपादद्वयशिरसां पंचानामंगानां जनिकाभिः पञ्चपिण्डिकाभिरिन्द्रियैश्चक्षुरादिभिः सूक्ष्मैर्युक्तो भवति ॥ ७५ ॥

[ ७६, ७७, ७८ श्लो. ] आकाशादित्यादि । पित्तादित्यादि । भूमेरित्यादि । **स्पर्शनं** स्पर्शनेन्द्रियं स्पर्शश्च । **व्यूहनं** संघातः ।

**पित्ताद**ग्निरूपात् । **दर्शनं** चक्षुरिन्द्रियम् । **पक्तिः** पाचकत्वम् । **रसनं** रसनेन्द्रियम् । **मूर्तिः** काठिन्यम् । एतत् सर्वमजो जीवात्मा तृतीये मासि गृह्णाति । ततश्चतुर्थे मासि **स्पन्दते** । अत एव **पारस्करेण** ( १।१४।१–२ )—“पुंसवनं परात्स्पन्दनात्” इति द्वितीये तृतीये वा कर्त्तव्यतोक्ता ॥ ७६–७८ ॥

[ ७९ श्लो. ] द्वौहृदेत्यादि । गर्भस्थस्य गर्भिण्याश्चैकीभूतं हृदयद्वयं तेनाभिलषितं द्रव्यम् । निपातनाद्वौकारः । स्पष्टमन्यत् । तथा च **श्रुतिः** “द्वौहृदादानात् काणं कुब्जं वामनं वा जनयति । तस्मात्सा यदिच्छेत्तत्तस्यै प्रदापयेत् । वीर्यवन्तं चिरायुषं जनयति” ॥ ७९ ॥

[ ८० श्लो. ] **स्थैर्य**मित्यादि । तृतीयमासजातानां करचरणादीनामिन्द्रियाणां च चतुर्थे स्थैर्यं प्रव्यक्तत्वं भवति । व्यक्तमन्यत् ॥ ८० ॥

[ ८१ श्लो. ] **मनश्चे**त्यादि । मनसा चेतनया युक्तः सप्तमेऽष्टमे च त्वगादिभिः ॥ ८१ ॥

[ ८२ श्लो. ] **पुनरि**त्यादि । यस्माद्गर्भस्थस्य ओजो गर्भाशयक्रमेण तज्जननीतः संक्रान्तं अष्टमे मासि पुनर्गर्भाशयं तज्जननीं चास्थिरत्वाद्गच्छति अतोऽस्मिन् मासि जातो गर्भः प्राणैस्त्यज्यते । प्राणस्थितेरोजःस्थित्यनधीनत्वात् । ओजश्च हृदि तिष्ठति ॥ ८२ ॥

[ ८३ श्लो. ] **नवम** इत्यादि । ततो नवमे दशमे मासि प्रसवहेतुप्रबलमारुतैर्योनियंत्रच्छिद्रेण सत्वरो निःसार्यते । **बाण इव** धनुर्यन्त्रेण । क्वचित् ‘जन्तुश्छिद्रेण’ इति पाठः ॥ ८३ ॥

[ ८४ श्लो. ] **तस्ये**त्यादि । तस्यात्मनः शरीराणि षट्प्रकाराणि भवंति । तानि च पृथिव्यादीनि पञ्च । स्वयं षष्ठः । तानि **शरीराणि षट्**प्रकारस्त्वचो धारयन्ति । **सुश्रुते** सप्तप्रकारा इत्युक्तम्– “अवभासिनी रोहिता श्वेता ताम्रा वेदिनी रोहिणी वंशधरा” । **अंगान्यपि षट्** धारयन्ति । बाहुद्वयं जंघाद्वयं शिरो गात्रं चेति । **अस्थ्नामपि** षष्ट्यधिकं शतत्रयम् ॥ ८४ ॥

[ ८५ श्लो. ] तद्विभागमाह । **स्थालैरि**त्यादि । स्थानानि दन्तबद्धस्थानानि । तैः सह

---

१ ब–अधि । २ ब–षि ।

दन्ताश्चतुःषष्टिः नखाश्च विंशतिः पाणिपादशलाकाश्च विंशतिस्तासां हस्तद्वयेन पादद्वयेन च **स्थानचतुष्टयम्**। एवं च चतुरुत्तरशतमस्थीनि ॥ ८५ ॥

[ ८६ श्लो. ] **षष्ठीत्यादि**। अंगुलीनां प्रत्येकं त्रीणि त्रीणीत्येवं षष्टिरस्थीनि। अरत्निकास्थीनि बाह्वोः। एवं चतुःसप्ततिरस्थीनि ॥ ८६ ॥

[ ८७ श्लो. ] **द्वे द्वे** इत्यादि। अक्षसंज्ञे द्वे जानुसंज्ञे द्वे। एवं च चतुर्दशास्थीनि ॥ ८७ ॥

[ ८८ श्लो. ] **भगास्थीत्यादि**। **हनु** चिबुकं। एवं चतुःषष्टिरस्थीनि ॥ ८८ ॥

[ ८९ श्लो. ] **तन्मूल** इत्यादि। **तन्मूले** हनुमूले द्वे ललाटेऽक्षिगण्डे द्वे नासायां च घनास्थिकायामेकम्। **पार्श्वकाः** पञ्जरास्थीनि तदाधारैः स्थानैरर्बुदैश्च सह द्विसप्ततिर्भवति। एवमेकाशीतिरस्थीनि ॥ ८९ ॥

[ ९० श्लो. ] **द्वावित्यादि**। कर्णभ्रुवोर्मध्ये **द्वौ शंखकौ**। **शिरसः कपालानि चत्वारि**। **उरः सप्तदश**। एवं त्रयोविंशतिः। एवं पुरुषस्यास्थिसंग्रहः कथितः ॥ ९० ॥

[ ९१ श्लो. ] **गन्धेत्यादि**। अत्र शरीरे विषयाः पञ्च। इन्द्रियाणि षट् ॥ ९१ ॥

[ ९२ श्लो. ] **हस्तावित्यादि**। **कर्मेन्द्रियाणी**ति। कर्मोक्तं **विष्णुपुराणे**—

" विसर्गशिल्पशक्त्युक्तिकर्म तेषां च कथ्यते "। विसर्गोऽत्र मूत्रपुरीषोत्सर्गः। **मनश्चो**भयोपकारकत्वादुभयात्मकम् ॥ ९२ ॥

[ ९३ श्लो. ] **नाभिरित्यादि**। नाभ्यादीनि विशेषतः प्राणस्थानानि ॥ ९३ ॥

[ ९४-९५ श्लो. ] **वपेत्यादि**। **आमाशय** इत्यादि। **वपा** हृदयसमीपस्था। अवपा शोणितकिट्टप्रभवतण्डनाख्या। **अवहननं** फुप्फुसाख्यं प्लीहासमीपस्थम्। **नाभिः** पक्वामाशययोर्मध्ये शिराप्रभवः। **क्लोम** यकृत्समीपस्थम्। **यकृत्** हृदयाधो दक्षिणतः स्थितम्। **प्लीहा** हृदयाधो वामतः स्थितः। **क्षुद्रांत्रं** शोणितमेदःप्रभवं सार्द्धत्रिव्याममम्। **वृक्कौ** हृदयसमीपस्थौ पेष्याकारौ। **बस्तिर्मूत्राशयः**। **पुरीषाधानं** पुरीषाशयः।

आमाशयोऽपक्वाहाराधारः। **हृदयं** पुण्डरीकसमम्।

" पुण्डरीकसमं नृणां हृदयं स्यादधोमुखम्। जाग्रतां विकसत्यह्नि स्वप्ने नक्तं च मीलति "॥ इति **सुश्रुतम्**। **स्थूलांत्रं** गळनळकम्। **उत्तरौ** गुदौ। **कोष्ठौ** कोष्ठे भवौ। **विस्तारः** प्राणस्थानादयं विस्तार उक्तः ॥ ९४-९५ ॥

[ ९६-९७-९८ श्लो. ] **कनीनिके** इत्यादि। **वंक्षणावित्यादि**। **तालूदरमित्यादि**। **कूटे** अक्ष्णोः पार्श्वचर्मणी। **शष्कुली** कर्णशष्कुली। **दन्तवेष्टौ** दन्तपाल्यौ। **ओष्ठौ** दन्तच्छदौ। **ककुंदरे** पृष्ठवंशमूले कूपकौ। **वंक्षणौ** ऊरुमूले **स्तनौ** श्लेष्मप्रभवौ। **उपजिह्विका** जिह्वामूलभवा। **पिण्डिका** जंघयोरूर्वोर्मांसापिण्डिका। एवंनामकानि शरीरे विशेषतो ज्ञेयानि ॥ ९६-९८ ॥

[ ९९ श्लो. ] **अक्षीत्यादि**। अक्ष्णोरुपांतचतुष्टयम्। पादतलद्वयं हृदयं चेत्येतानि हृदयांतानि प्राणस्थानानि ॥ ९९ ॥

[ १०० श्लो. ] **शिरा** इत्यादि। **धमनि**र्नाडिका। ऋज्वर्थम् ॥ १०० ॥

[ १०१ श्लो. ] **एकोनेत्यादि**। धमनिसंयुक्तशिराः षट्पञ्चाशदधिकनवशतोत्तरोनत्रिंशल्लक्षा विजानीयात्। **लक्षाशब्दो**ऽयमाकारान्तः स्त्रीलिंगः ॥ १०१ ॥

---

१ ब-धारकैः।

[ १०२ श्लो. ] **अथ** इत्यादि। **अथ** इति छान्दसं रूपम् । व्यक्तार्थम् ॥ १०२ ॥

[ १०३ श्लो. ] **रोम्णामित्यादि** । रोम्णां सार्द्धसप्तषष्टिलक्षाधिकाश्चतुःपञ्चाशत् कोटिः । ताश्च सकलकेशश्मश्रुरोममार्गैः स्वेदनिर्गमद्वारैश्च सह अर्थात् ज्ञातव्याः । 'कोट्यश्चत्वार एव च' इति पाठान्तरम् ॥ १०३ ॥

[ १०४ श्लो. ] **वायवी** इत्यादि । वायवीयैर्विभक्ता अन्तर्गताः सन्तो मांसादि**परमाणवो विगण्यन्ते**। आगमानुमानादिना न प्रत्यक्षेण। अतो मद्वचनेन देहास्थिशिरादीनां वक्ष्यमाणरसादीनां **संस्थितिं** स्वरूपं **यद्येकोऽपि** स्वयमेवानुभवेत् तदा 'मोक्षायासौ कृती भवेत्' इति वक्ष्यमाणेन सम्बन्धः ॥ १०४ ॥

[ १०५–१०७ श्लो. ] **रसस्येत्यादि** । **श्लेष्मा** षडित्यादि । **श्लेष्मा**[2]**वित्यादि** । प्रस्थस्य[1] स्वीयांजलिरसादीनामुक्तसंख्ययांजलयो ज्ञेयाः । **मज्जा** ऐकोंऽजलिरक्षिमध्येऽर्द्धमर्द्धश्च मस्तके श्लेष्मप्रभवस्यौद्गमस्तावदेवार्द्धमेव । **रेतसो**ऽप्यर्द्धमेव । मज्जेति षष्ठ्यर्थे प्रथमा । इत्येवमुक्तस्यानित्यभूतसमूहारब्धं **वर्ष्म** शरीरमनित्यमस्थिरं यस्य पुनर्मोक्षार्थं भवत्य**सौ कृती** पण्डितः ॥ १०५–१०७ ॥

[ १०८–१०९ श्लो. ] **द्वासप्तेत्यादि** । मण्डलं तस्य मध्यस्य आत्मा दीप इवाचलः । **हृदयदेशादभि** सर्वतो **द्वासप्ततिसहस्राणि नाड्यो निःसृताः** । ताश्च रसादिवहनेन देहस्य हिता इति तासां मध्ये हृदये चन्द्रप्रभं मण्डलं विचिन्त्य तस्य च मध्ये आत्मा दीपवत् प्रकाशरूपोऽस्ति तं ज्ञात्वा **इह** संसारे **न पुनर्जन्म** लभते ॥ १०८–१०९ ॥

[ ११० श्लो. ] **ज्ञेयमित्यादि** । **आरण्यकं** यजुर्वेदब्राह्मणम् । **आदित्याद्य**दिदं याज्ञवल्क्यः प्राप्तवान् तद्योगसिद्धिमिच्छता **ज्ञेयम्**। **योगशास्त्रं** च योगियाज्ञवल्क्याख्यम् । योगश्च विषयेभ्यो निवृत्त्याऽभिप्रेतेऽर्थे मनसोऽवस्थानम् ॥ ११० ॥

[ १११ श्लो. ] **अनन्येत्यादि** । मनसोऽन्यविषयत्वे विकल्पादिबुद्धिः इन्द्रियस्य चान्यविषयत्वे रूपादिबाह्यसंवेदनम् । स्मृतेस्त्वन्यविषयत्वे घटादिस्मरणं स्यात् । अतोऽनन्यविषयत्वममीषां प्रयत्नतः कार्यं पूर्वं ज्ञेयमुक्तमत्र तु ध्यानमिति ॥ १११ ॥

[ ११२ श्लो. ] ब्रह्माधिगमार्थमुपायान्तरमाह । **यथेत्यादि** । तत्सवितुरित्यादि गायत्रीं सामशिक्षोक्तप्रकारेण गायन् अविच्युतमस्खलितं सावधानस्तदेकचित्तोऽभ्यासाद्यथा ध्यायन् ब्रह्माधिगच्छति तथायमपीति ॥ ११२ ॥

[ ११३–११४ श्लो. ] **अपरेत्यादि** । **ऋग्गाथेत्यादि** । **अपरांतकमुल्लोप्यं मद्रकं मकरी औवेणकं स्वरो बिन्दुरुत्तर** एतानि सप्तगीतानि । ऋग्गाथाद्याश्चतस्रो **गीतिकाः** । एतद्विशाखिनादिगीतशास्त्रे प्रसिद्धम् । तदुपदेशेन सततं ज्ञेयम् ॥ ११३–११४ ॥

[ ११५ श्लो. ] एतदेव परमार्थरूपतया चिन्तितं मोक्षसाधनत्वान्मोक्षम्। तदभ्यासस्यै[3]काग्रतापादनद्वारेणाद्वैतत्वं भजतीत्याह । **वीणेत्यादि** । **श्रूयते** इति श्रुतिः द्वाविंशतिविधा । षड्जादिसप्तस्वरेषु जातयः षड्जातयः शुद्धाः। एतयो**र्विशारदो** वीणावादनतत्वाभिज्ञः । तालध्वनिभेदज्ञाने च कुशलोऽप्रयत्नेनाप्रयासेनैव मोक्षमार्गं प्राप्नोति । यतस्तालादिलयभंगभयात्तदनुगतं चित्तमचलं भवतीति ॥ ११५ ॥

---

१ ब–सु । २ ब–स्थि । ३ ब–द्वादश ।

[ ११६ श्लो. ] **गीतिज्ञ** इत्यादि। यदि नाप्नोति विघ्नाभिभूतयोगेनेत्यर्थः। व्यक्तमपरम्॥११६॥

[ ११७ श्लो. ] शरीरमेवात्मेति लोकायतिकनिरासार्थमाह। **अनादि**रित्यादि। अनादिरयमात्मा **श्रुतो** कथितः। तस्य कर्मभोगार्थं शरीरमादिरादेयम्[1]। आत्मार्जितकर्मद्वारा सर्वं जगज्जायते जगतश्च सकाशात् ‘ आहुत्याप्याप्यते सूर्य ’ ( प्रा. ७१ ) इत्याद्युक्तक्रमेण शरीरलाभ एवात्मनः संभवः॥ ११७॥

[११८ श्लो.]ते मुनयो मोहमुपगता याज्ञवल्क्यं पृच्छान्ति। **कथमि**त्यादि। **देवासुरमानुष**सहितमेतज्जगत् **कथमुद्भूत**मात्मनः **आत्मा च तस्मिन्** जगति कथमुद्भूतस्तदस्माकं वदस्वेति॥११८॥

[ ११९ श्लो. ] **मोहे**त्यादि।

“ अप्रकाशकरीं बुद्धिं तमसावृत्य सर्वतः। प्रथमं जायते मोहो देहिनां हृदि पापजः” ॥ इत्युक्तमोहजालं परित्यज्योक्तध्यानादिना हृदयदेशे **यः पुरुषो**ऽसंख्यकरचरणनेत्रयुक्तः **सहस्रकर** इत्यसंख्यातशिराश्चावगम्यते। सूर्यवदित्यसंख्यातावयवयोगेन सादृश्यम्। तथा च **मंत्रः**—“सहस्रशीर्षा” इति। सहस्रकरपादित्यनेन सर्वगतत्वं नेत्रेण सर्वज्ञत्वं लक्षयति॥ ११९॥

[ १२० श्लो. ] **स आत्मे**त्यादि। स एव पुरुषो जीवात्मा यज्ञपुरुषो बहुरूपोऽत एव **प्रजापतिर्विराट्** च। स **एवान्नरूपेण** परिणतो यज्ञसाधनत्वमुपगच्छति॥ १२०॥

[ १२१–१२३ ] **यो द्रव्ये**त्यादि। तस्मिन् यज्ञे देवतोद्देशेन द्रव्यत्यागाद्यो **रसः संभूतः** प्रकृष्टः स रसो **देवान्संतर्प्य यजमानं यज्ञफलेन संयोज्य वायुना**ऽसौ रसः[2] सोमस्थानं प्राप्यते सोमरश्मिभिः सूर्यस्थानं तदित्यादि। **असावादित्यस्तेन** रसेन तदात्मनो मण्डलममृतं[3] जलमयमाकृष्टं[4] **सृजति**। **अशनात्मनां**[5] जंगमानां अनशनात्मनां स्थावराणां वृष्टिद्वारेणोत्पत्तिर्भवति॥ १२१–१२३॥

[ १२४ श्लो. ] **तस्मादि**त्यादि। **अनाद्यन्तं** नित्यं **चक्रं** चक्रभ्रमणवत् कार्यकारणत्वमावर्तते॥ १२४॥

[ १२५ श्लो. ] यद्ययं संसारश्चक्रवद्भ्रमति तर्ह्यात्मनामप्युत्पत्तिविनाशयोगिनां कथं मोक्षः स्यादित्यत आह। **अनादि**रित्यादि। आत्माऽयमादिशून्यो अतश्चास्यान्तर्वर्त्तिनो[6] न संभवोऽस्ति किं तु योऽयं पुरुषो जीवात्मा स **मोहेच्छाद्वेषकर्मणः समवायी**। ततश्च[7] मोहेच्छाद्वेषकर्मनिमित्तोऽयं संसारबन्धः। यदा तु यथाविधकर्मरहितस्तदाऽस्मादेव अस्य मोक्ष इत्यर्थः॥१२५॥

[ १२६-१२८ श्लो. ] वर्णसृष्टिमाह। **सहे**त्यादि। हे मुनयः योऽसौ सहस्रकरचरणादियुक्तः परमात्मा आदिदेवो मया कथितः तस्य परमात्मनो मुखबाहूरुपादेभ्यो ब्राह्मणादयो यथाक्रमं याताः। तस्य च निरवयवत्वादौपचारिकोऽयं प्रयोगः “पृथिवी पादतस्तस्य शिरसो द्यौरजायत” इत्यादिद्वयस्यार्थः। **नस्तो** नासिकायाः। **शिखी** वह्निः। **जघनात्** कटिदेशात्। पृथिव्यादि तस्य पादादिभ्यो जातम्॥ १२६–१२८॥

---

१ ब—अनादेरात्मनः कर्मभोगार्थं शरीरमादेयं। २ ब—आत्मस्थेन वातेन। ३ ब—अमृतमयं। ४ ब—उत्सृष्टं। ५ ब—यत्सकाशात्। ६ अ—अन्तवर्तिनो। ७ ब—एतन्निमित्तोऽस्य संसारबंधः।

[ १२९ श्लो. ] मुनयः पुनः पृच्छन्ति **यद्येवमि**त्यादि । हे ब्रह्मन् यदि आत्मैव जीवादिभावं भजते कथमसौ पापयोनौ जायते कथं **चानिष्टैः** शोकमोहादिभिर्भावैर्युज्यते यत **ईश्वरः स** इति॥१२९॥

[ १३० श्लो ] **करणै**रित्यादि । करणैर्मनोबुद्धीन्द्रियैरन्वितस्यापि पूर्ववत् सर्वविषयज्ञानं कथं न भवति । कस्माच्च सर्वदेहगतोऽपि सर्वदेहिगतां सुखदुःखादिवेदनां न वेत्ति ॥ १३० ॥

[ १३१ श्लो. ] पृष्टविषये उत्तरदानाय वस्तुस्थितिमाह । **अन्त्यपक्षी**त्यादि । अन्त्यजं पक्षिभावं स्थावरतां च मनोवचनकर्मकृतैर्दोषैरुपभुक्तशेषैरयं जीवो याति । तैरेव दोषैः पुनः पुनर्भवमुत्पत्तिं प्राप्नोति ॥ १३१ ॥

[१३२ श्लो.] **अनन्ता** इत्यादि । भावा अभिप्रायविशेषा नानाप्रकारा यादृशास्तथारूपाण्यंधत्व-कुब्जत्वादीनि मानुषादियोनिषु जातानां शरीरिणां भवन्ति॥ १३१ ॥

[ १३३ श्लो. ] यदि भावाधीनमिदं तदा कथमस्मिन्संसारे योनिषु तथाविधो न जायते। तत्राह **विपाक** इत्यादि । **विपाकः** कर्मणां फलदानोन्मुखत्वं तन्निबन्धनेयं व्यवस्था: **प्रयोजनं** प्रयोजकः ॥ १३३ ॥

[ १३४–१३६ श्लो. ] मनोवाक्कायदोषान् विशेषतो दर्शयति। **परे**त्यादि। **पुरुष** इत्यादि। **अदत्ते**त्यादि । परद्रव्याभिधानं परद्रव्यहरणाचिन्तनं अनिष्टचिन्तनं परापकाराचिन्तनम् । **वितथाभिनिवेशो**ऽतत्त्वानिर्बन्धः । पैशुन्यं परगुणापलापेन परदोषकथनम् । **अनिबद्धप्रलापो** निष्प्रयोजनभाषणम् ॥ १३४-१३६ ॥

[ १३७ श्लो. ] **आत्मज्ञ** इत्यादि । आत्मस्वरूपज्ञः बाह्याभ्यान्तरशौचवान् । **दान्तः** शीता-तपादिदुःखसहिष्णुः । **तपस्वी** चान्द्रायणादियुक्तः । **वेदवित्** वेदार्थज्ञः । एते **सात्त्विका** वेदितव्याः । जन्मान्तरे चैतास्वेव योनिषूत्पद्यन्ते ॥ १३७ ॥

[ १३८ श्लो. ] **असदि**त्यादि । लोकशास्त्रविरुद्धकर्माभिरतः । **अधीरः** अल्पेऽप्युपघातहेतौ अनाश्वासगृहीतः । कर्मणां काम्यानां दृष्टार्थानां चारम्भशीलः । नृत्यगीताद्यासक्तः । एते राजसा ज्ञेयाः । मृताश्चैते मनुष्ययोनिषु जन्म प्राप्नुवन्ति ॥ १३८ ॥

[ १३९ श्लो. ] **निद्रालु**रित्यादि । **क्रूरकृत्** स्वल्पेऽप्यपराधे वैरानुबन्धकृत् । **भिन्नवृत्तः** शीलभ्रष्टः । एते तामसास्तिर्यग्योनिषु जायन्ते ॥ १३९ ॥

[ १४० श्लो. ] यद्येवमित्यादिनोक्तप्रश्नत्रयक्रमेणोत्तरमाह । **रजसे**त्यादि । इह संसारे रजस्तमोभ्यामयमाविष्टो भ्रमन् वस्तुतत्त्वार्थमन्यथा जानन् **भावैः** पूर्वोक्तै**रनिष्टै**र्दुःखहेतुभिः संपृक्तः **संसारं प्रतिपद्यते** जन्ममरणप्रबन्धं प्राप्नोति । तस्मात्कथमनिष्टभावैर्युज्यत इत्यचोद्यम् ॥१४०॥

[ १४१ श्लो. ] करणैरन्वितस्येति यदुक्तं तत्राह । **मलिन** इत्यादि । अविपक्वकरणता हि रजस्तमोंऽशावृतत्वम् । **आत्मज्ञानस्य** स्वप्रकाशस्य । स्पष्टमन्यत् ॥ १४१ ॥

[ १४२ श्लो. ] आदर्शो मलावृतत्वेनाप्राप्तं न प्रकाशयेत् । आत्मा तु विभुत्वान्नित्यप्राप्तः कथं तस्याप्रकाश इत्यत्राह । **कट्वेर्वारा**वित्यादि । यथाऽपक्वतिक्तकर्कटिकायां विद्यमानो मधुररसः पाकाभावेनाव्यक्तत्वात् नोपपद्यते तथा चेतनेऽप्यात्मन्यपक्वकषायत्वादज्ञत्वमिति ॥१४२॥

[ १४३ श्लो. ] **सर्वे**त्यादि । यश्च **योगी** भवति स सर्वदेहिगतां **वेदनां** स्वकर्मोपार्जिते शरीरे लभते । यश्च **मुक्तो** भवति स सर्वासां वेदनानां न वेदिता भवति । न दुःखोपभोक्ता भवति । ॥ १४३ ॥

१ ब–अकर्मणां । २ ब–कः ।

[ १४४ श्लो. ] एवं च "वेत्ति सर्वगतां कस्मात्सर्वासां न च वेदनाम्" इत्यतः कथमेकस्मिन्नात्मन्यनेकबुद्धिरित्यत आह । एकोऽप्यनेकः शरीराद्युपाधिभेदात्

**आकाश**मित्यादि । आकाश इव घटपटादिभेदादादित्य इव जलाधारभेदात् । **ब्रह्मपुराणम्**— " तत्र सक्तस्तु पुरुषो बध्यते प्रकृतेर्वशात् । चोरसम्पर्कवेषेण बध्यते शीलवानिव ॥ "ब्रह्मखानिलतेजांसि जलं भूश्चेति धातवः । इमे लोका एषु चात्मा तस्मात्सर्वं चराचरम्" ॥ १४४ ॥

[ १४५ श्लो. ] **ब्रह्म** आकाशादीनि पञ्चभूतानि शरीरधारणत्वा**द्धातवो**ऽभिधीयन्ते । एते च ब्रह्मान्तरीक्षवाय्वग्निवरुणभूमयो **लोका** अपि एषु चात्मा भिन्नस्वरूपः स्थितः । **तस्मा**दात्मन एव सर्वं चराचरभूतजातं परिणतमिति ॥ १४५ ॥

[ १४६–१४८ श्लो. ] **मृदि**ति । **हेमे**त्यादि । **कारणे**त्यादि । कुम्भकारादिवदयमात्मा पृथिव्यादीन्यादाय मनुष्यादियोनिष्वात्मानं सृजति तैरेव पृथिव्यादिभिर्मिलित्वा **कारणानि** घ्राणादि सृजति । अनेकदृष्टान्तप्रयोजनं यथाकथंचित् द्रष्टव्यम् ॥ १४६–१४८ ॥

[ १४९ श्लो. ] **महाभूते**ति । उक्तात्मसत्वे प्रमाणमाह । **महेत्यादि** । यथा पृथिव्यादीनि प्रत्यक्षतः सत्यानि तथात्मा पृथिव्याद्यतिरिक्तः सत्यः । अन्यथैकेन चक्षुरिन्द्रियेण दृष्टं वस्तु अपरेण स्पर्शनेन्द्रियेण न प्रत्यभिजानीयात् । योऽहमद्राक्षं सोऽहं स्पृशामीत्येकस्य प्रत्यभिज्ञान्तरभावात् ॥ १४९ ॥

[ १५० श्लो. ] **वाचामि**त्यादि । को वाचं पूर्वं श्रुतं विशेषतो जानीते । अतीतेऽर्थेऽनुभूते कस्य स्मृतिः । स्मर्तुरेकस्याभावात् चक्षुराद्यनुभूतविषयाणि को वा स्वप्ने पश्येत् । यद्येको द्रष्टा न स्यात् ॥ १५० ॥

[ १५१ श्लो. ] **जाती**त्यादि । यद्येकोऽभिमन्ता मनुष्योऽहं रूपवान् युवा सम्पन्नो विद्वान् देवदत्तभ्रातेत्यादि शरीराद्यतिरिक्ताऽहंशब्दसमानाधिकरणमभिमन्येत । शब्दादिविषयेषु पूर्वानुभूतेषु कर्मादिभिरासक्तो भवेदेकस्यानुभवितुरभावात् ज्ञानस्य तत्संततेश्चास्थिरत्वात् ॥ १५१ ॥

[ १५२ श्लो. ] **स संदिग्धे**त्यादि । स यदाऽविवेकात्संप्लुतः विसंकलितचित्तः दानादीनां परलोकफलमेव आस्ति न वेति संदिग्धमतिः स्यात्तदा सर्वप्रमाणसिद्धमात्मानमसिद्धं मन्येत ॥ १५२ ॥

[ १५३ श्लो. ] **ममेति** । अस्याविवेकसंप्लुतस्य एतादृशी मतिः स्यात् । **अह**मेव ईश्वर इति शेषः ॥ १५३ ॥

[ १५४ श्लो. ] **ज्ञेयज्ञे** आत्मनि **प्रकृतौ** गुणसाम्यलक्षणायां **विकारे** बुध्यादा**वविशेषज्ञान**वान् । बुध्यादावेवात्मज्ञानवान् । अत एव स्वहितमजानन् **अनशनादिना** आत्मत्यागी भवेत् ॥ १५४

[ १५५ श्लो. ] **एवमि**त्यादि । **एवं** विशेषेणानाधिगतात्मतत्वो **वृत्तः स वितथाभिनिवेशवान्** असत्यवस्तुनि निर्बन्धवान् । तत्कृतेन **कर्मणा रागद्वेषमोहाभ्यामिच्छया च** रजस्तमोजन्यया **बध्यते** पुनः पुनः संसार्यते ॥ १५५ ॥

[ १५६ श्लो. ] **आचार्ये**त्यादि । तस्मादाचार्योपासनया उपनिषद्ब्रह्ममीमांसाशास्त्रेषु[3] **विवेकिता** कार्या । तद्विहित[4]**कर्मणामनुष्ठानं** पण्डितैः सङ्गो मधुराश्च गिरः कार्याः ॥ १५६ ॥

[ १५७ श्लो. ] **स्त्र्यालोके**त्यादि । स्त्रीदर्शनस्पर्शननिवृत्तिः । ब्रह्मादिकीटान्तं मत्तोऽभिमतिर्दारादि**त्यागो** गैरिकादिरक्तजीर्णवस्त्रधारणं कार्यम् ॥ १५७ ॥

[ १५८ श्लो. ] **विषे**त्यादि । **विषये इन्द्रियसंयमः** । **तन्द्रा** निद्राप्रतिनिधिः । **आलस्यं** निरुत्साहः । **शरीरपरिसंख्यानं** शरीरस्याशुचित्वास्थिरत्वादिदोषवत्त्वेनानुसन्धानम् । **प्रवृत्तिषु** संसारहेतुषु अघदर्शनम् । एतन्मुमुक्षुणा कार्यम् ॥ १५८ ॥

---

१ **ब**–समाकुलित । २ **ब**–जातनिर्बंधः स । ३ **ब**–शास्त्रार्थस्य । ४ **ब**–तत्कर्मणां विहितानां आलंभस्पर्शनं—।

[ १५९ श्लो. ] नीरज इत्यादि । निर्गतरजस्तमोभावः । रजस्तमोऽज्ञानाभिभवलक्षणा सत्वशुद्धिः । शमः कोपविषयेऽप्यकोपः । एतैराचार्योपासनादिभिरुपायैर्योगी मुक्तो भवति॥१५९

[ १६० श्लो. ] तत्त्वेत्यादि । तत्त्वस्मृतेरात्मचिन्तनात् । उपस्थानादाराधनात् । सत्वयोगात् । रागादिक्षयात् । कर्मणामाश्रमविहितानां ध्यानसमये सन्निकर्षात् योगो मनसो वृत्तिनिरोधात् क्षेत्रज्ञपरमात्मनोरेकीभावः प्रवर्त्तते । यदाह दक्षः ( ७।१५ )—

" वृत्तिहीनं मनःकृत्वा क्षेत्रज्ञं परमात्मनि । एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते " ॥ कर्मसान्निकर्षस्य ज्ञानहेतुत्वे मत्स्यपुराणम्—

" अयमेव क्रियायोगो ज्ञानयोगस्य साधकः । कर्मयोगं विना ज्ञानं कस्यचिन्नेह दृश्यते " ॥

योगियाज्ञवल्क्यः—

" ज्ञानकर्मसमायोगात् परमाप्नोति पुरुषम् । पृथग्भावेन सिध्येत तात तस्मात्समाश्रयेत् ॥

" ज्ञानं प्रधानं न तु कर्महीनं कर्म प्रधानं न तु बुद्धिहीनम् ।

" अतस्तयोरेव भवेच्च सिद्धिर्न ह्येकपक्षो विहगः प्रयाति " ॥ यत्तु महाभारते—

" कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः " ॥ इति तत् काम्यनैमित्तिककर्माभिप्रायेण ॥ १६० ॥

[ १६१ श्लो. ] शरीरेत्यादि । शरीरवियोगकाले यस्याविप्लुतज्ञानस्य सत्वस्थं कामक्रोधादिरहितं सम्यगेकाग्रं परमात्मनि वर्त्तते स जन्मान्तरे जातिस्मरत्वं गच्छति ॥ १६१ ॥

[ १६२ श्लो. ] यथा हीत्यादि । यथा नटस्तनुं रामरावणादिरूपां श्रयति तथाऽऽत्मा कर्मजां तनुं नानाविधां मानुषसरीसृपादिरूपां करोति ॥ १६२ ॥

[ १६३ श्लो. ] कालेत्यादि । कालः प्रतिषिद्धः । कर्म गर्भोपघातादि । आत्मबीजं वाय्वाद्यभिभूतम् । मातुः रजस्वलाकृतांजनादिः । न केवलं कर्मदोषान्नानाविधं शरीरं किंतु कालादिदोषादपि अंगहीनादि जन्मनो गर्भस्य वैकृतं दृष्टम् ॥ १६३ ॥

[ १६४ श्लो. ] शरीरसाध्यत्वात् कर्मणः पूर्वं शरीराभावे कर्माभावात् कथं शरीरोत्पत्तिरित्यत आह । अहंकारेणेत्यादि । अयमात्मा शरीरेण न कदाचित् मुक्तपूर्वः अहंकारादिना च गत्या संसरणरूपया । ततश्च प्रवाहनित्य एवास्य शरीरसम्बन्धः ॥ १६४ ॥

[ १६५ श्लो. ] वर्त्त्याधारेत्यादि । वर्त्त्याधारस्नेहयोगात् यथा दीपस्य स्थितिरेवमात्मनोऽप्यायुःकर्मादियोगात् प्राणस्य स्थितिः । यथाऽविकलवर्त्त्यादिसद्भावेऽपि प्रचण्डवातादिना प्रदीपविनाशः तथा सत्यप्यायुःकर्मादौ अतिप्रबलाऽशुभकर्मवशान्नौनिमज्जनादौ प्राणवियोग इत्यत्रापि कर्मनिमित्त एव विनाश इत्यव्यभिचारः ॥ १६५ ॥

[ १६६–१६७ श्लो. ] अनन्ता इत्यादि । ऊर्द्ध्वमित्यादि । योऽसौ परमात्मा हृदि दीप इव स्थितः । तस्य सितासिताद्या नानारश्मयस्तस्य मध्ये एक ऊर्ध्वस्थितो यः सूर्यमण्डलं भित्वा ब्रह्मलोकमाक्रम्यास्ते तेन परां गतिं परस्य मोक्षमार्गत्वात् ॥ १६६–१६७ ॥

---

१ ब—ब्रह्मज्ञानस्य । २ ब—तस्माद्ध— । ३ ब—प्रसिद्धः । ४ ब—आत्मा अशुभकर्मा । ५ ब—पुरा अनित्य । ६ ब—यौ ।

[ १६८–१६९ श्लो. ] यदस्येत्यादि । येऽनैकेत्यादि । अस्यात्मनो यदन्यद्रश्मिशतमूर्द्धमेव व्यवस्थितं तेन देवशरीराणि कमनीयानि सप्रसराणि प्राप्नोति । ये चास्याऽनेकरश्मयो मृदुदीप्तयोऽधस्तात् स्थितास्तैरिह कर्मभोगफलार्थं संसरति । अवशः अस्वतन्त्रः दुःखहेतुकर्माधीनत्वात् । अत एव महाभारते—“ पद्भ्यामुत्क्रममाणस्य वैष्णवं स्थानमुच्यते ” इत्यादि प्रत्यंगमुत्क्रमफलमभिधाय ब्रह्माणमाप्नोति ॥ १६८–१६९ ॥

[ १७०–१७३ श्लो. ] विभुं मूर्ध्ना देवाग्रजं तयेत्यभिहितम् । पुनरप्यात्मनो भूतातिरिक्तत्वे हेतुमाह । वेदैरित्यादि । श्रेयसेत्यादि । तारेत्यादि । मन्वन्तरैरित्यादि । शास्त्रैः प्रत्यक्षादिनिरूपकैः । विज्ञानैस्तर्कैः । जन्मना जातमात्रस्य हर्षादिदर्शनात् । मरणेन सत्येव शरीरे[3] ज्ञानाद्यभावेन । आर्त्या पीडया । यतः स एव चिकित्स्यः श्रूयते यथा स खल्वेष पुरुषश्चिकित्सायामधिकृत इत्यादि । गत्या गमनेन । आगत्या आगमनेन । ते च प्रयत्नकारिते शरीरे तदसम्भवात् । सत्यासत्यवचने पुरुषगुणदोषकारिते ॥ १७० ॥

श्रेयसा[4]ऽभ्युदयहेतुना सुखदुःखाभ्यां सुख्यहं दुःख्यहं इत्यहंकारस्य शरीरातिरिक्तविषयत्वात् । शुभाशुभैर्जन्मान्तरार्जितैः सुखदुःखानुमितैः । निमित्तं कपोतपातादि । शाकुनं दक्षिणाङ्गस्पन्दनादि । ज्ञानं विमर्श[6]रूपम् । ग्रहसंयोगः जन्मादिसमये शुभग्रहसंयोगः । तेषां फलैः । एते निमित्तादयो जन्मान्तरीयादृष्टाद्भवन्ति ॥ १७१ ॥

तारा अश्विन्यादयः । इतराणि नक्षत्राणि तत्संचारैः ज्योतिःशास्त्रदृष्टैः । जाग्रद्दशायां प्रेतादिस्पर्शनैर्निद्राद्दृष्टैश्च तैलाभ्यंगादिभिः । आकाशादिभिर्दिव्यान्तरीक्षभौमादिभिरुत्पातैः । एते तु प्राक्तनादशुभाज्जायन्ते ॥ १७२ ॥

मन्वन्तरयुगान्तरानुभूतवेदादेः संस्काररूढस्य सृष्ट्यादौ मंत्रौषधप्रयो[7]गैश्च भूतसंघाते संभवद्भिः[8] । तदतिरिक्तमात्मानं विजानीयात् ॥ १७३ ॥

[ १७४–१७६ ] अहंकार इत्यादि । सर्ग इत्यादि । यत इत्यादि । इन्द्रियान्तरसंचार इन्द्रियान्तरादाकृष्य मनस इन्द्रियान्तरे संधारणम् ।

शरीरस्य सर्गो देहान्तरगमनं भावानां चक्षुरादीनां प्रेरणम् । मनसो गतिरनुभूतविषयदेशगमनम् । आदानं जन्मसमये पञ्चभूतानां शरीरोत्पत्त्यर्थं ग्रहणम् ।

ईश्वरः स्वतंत्रः । एतानि लिंगानि शरीराद्यतिरिक्त आत्मनि प्रमाणम् ॥ १७४–१७६ ॥

[ १७७–१७८ श्लो. ] बुद्धीत्यादि । अव्यक्त इत्यादि । सार्थानि सविषयाणि । अस्य[10] बुध्यादिगणस्य क्षेत्रसंज्ञकस्याव्यक्तो[11]ऽयमात्मा क्षेत्रज्ञ इति मुनिभिः स्मृतः । सर्वभूतेषु भेदेन स्थितः । प्रमाणप्रतीतत्वात् सन्नुच्यते । घटादिवदप्रतीतेरसन्निति । उभयात्मकत्वाच्च सदसद्रूपः स एव ॥ १७७–१७८ ॥

[ १७९ श्लो. ] बुद्धेरित्यादि । बुद्धेर्महदाख्यस्य सत्वरजस्तमोरूपगुणसाम्यलक्षणादव्यक्ताद्उत्पत्तिः । ततो बुद्धेरभिमानलक्षणस्याऽहंकारस्य सम्भवः । तस्मादहंकारादाकाशादितन्मात्राणि एकाधिकगुणा[12]नि । आदिग्रहणादिन्द्रियादिमनश्च ॥ १७९ ॥

---

१ ब–भास्वराणि । २ ब भूतादिव्यति–। ३ अ–र । ४ अ–श्रेयो । ५ ब–ल । ६ अ–र्ष । ७ ब–योगै–। ८ ब–असंभवद्भिः । ९ ब–संयोगो । १० ब–तस्य । ११ ब–क्त्वादुत्पत्तिः । १२ ब–णि ।

[ १८० श्लो. ] **शब्द** इत्यादि। आकाशादितन्मात्राणां शब्दादयो गुणा एषां मध्ये **यो गुणो यस्मात् निःसृतः स** शब्दादिविनाशे **तस्मिन्नेव लीयते** अव्यक्ततां याति ॥ १८० ॥

[ १८१ श्लो. ] **यथेत्यादि**। ईश्वरोऽपि सन्नयं परमात्मा येन प्रकारेणात्मानं सृजति स युष्माकं **कथितः**। **कर्मणां** मनोवाग्देहकृतानां **विपाको** यथा सोऽप्यभिहित इति प्रश्नार्थोपसंहारः॥१८१॥

[ १८२ श्लो. ] **सत्वमित्यादि**। आत्मन एव सत्वादयो **गुणाः** कथितास्तत्र **रजस्तमोभ्या**-मुपचिताभ्याम**विष्टः** संसारे **चक्रवद्भ्राम्यते**। तत्र सत्वं लघुप्रकाशकम्। उपष्टंभकं चलं च रजः। गुरु आवरकं तम इति ॥ १८२ ॥

[ १८३ श्लो. ] **अनादिरिति**। **स एषं** परमात्मा सादिरनादिश्च दर्शितः। यस्तु शरीरी पुर्य्यष्टकवेष्टितो ग्राह्यः स विकारः कथितः। पुर्य्यष्टकमाह **सनन्दः**—

"भूतेन्द्रियमनोबुद्धिवासनाकर्मवायवः। अविद्या चाष्टकं प्रोक्तं पुर्यष्टमृषिसत्तमैः" ॥ १८३ ॥

[ १८४ श्लो. ] **पितृयाणेत्यादि**। पितृणां वस्वादीनां यानेन यत्र गम्यते तत् पितृयाणं **अजवीथी** देवमार्गः। तत्रापि देवयानेन गम्यते। एतद्द्वयस्यागस्त्यमार्गस्य यदनंतरं मध्यं तेना**ग्निहोत्रिणः** स्वर्गमिच्छन्तो **दिवं** स्थानविशेषं **गच्छन्ति**। दक्षिणांदिगाश्रितोऽयं मार्गः॥१८४॥

[ १८५ श्लो. ] **ये चेत्यादि**। **सम्यग्** यथाविधीत्यर्थः। अष्टगुणानाह **बृहस्पतिः**—

"दया क्षमाऽनसूया च शौचानायासमङ्गलम्। अकार्पण्यमस्पृहत्वं सर्वसाधारणानि च" ॥ दानपरा अप्यनेनैव मार्गेण दिवं प्रयान्ति ॥ १८५ ॥

[ १८६ श्लो. ] **अष्टाशीत्यादि**। **तत्र** संसारे **अष्टाशीतिसहस्राणि ऋषयो** गृहस्थाः पुनः पुनरावर्त्तन्ते सृष्ट्यादौ संसारजन्मनि। त एव बीजभूता वैदिककर्मप्रवर्त्तकाः ॥ १८६ ॥

[ १८७–१८८ श्लो. ] **सप्तर्षीत्यादि**। **तपसेत्यादि**। **तावन्त एव** सप्तर्षिनागवीथ्योरन्तरे यो देवानां लोकस्तं **समाश्रिताः** संसारारंभरहिता ब्रह्मचर्यादियुक्तास्तत्रैव लोके **आहूतसंप्लवं** प्रलयं यावत्तिष्ठन्ति। **नागवीथी** देवमार्गः। अयं लोकः सप्तर्षीणामुत्तरभागे ॥ १८७–१८८ ॥

[ १८९ श्लो. ] **यत** इत्यादि। **विद्या** वेदाङ्गानि। **श्लोका** महाभारतादयः। **सूत्राणि** गोतमादिप्रणीतानि। **भाष्याणि** व्याख्यानयुक्तानि। अन्यद्वाङ्मयमायुर्वेदादि येभ्यो मुनिभ्य एते वेदादयो मेधावित्त्वेन स्मृत्या रूढाः सृष्ट्यादौ ते पुनः प्रणीयन्ते तत्रैव तिष्ठन्ति। यद्यपि वेदवत्पुराणादयोऽपि नित्यास्तथाप्यानुपूर्वीसंक्षेपविस्तारद्वारेणान्या एव। यथा मन्वादेर्भृगवादि-प्रोक्तता। वेदे त्वानुपूर्वीस्वरनिगदश्च स एव न तैरन्यथाक्रियते ॥ १८९ ॥

[ १९० श्लो. ] **वेदेत्यादि**। **वेदानुवचनं** वेदाभ्यासः। एषां पापक्षयद्वारा ज्ञानहेत्वर्थं न ज्ञानस्यैव साक्षात्। यथा **मनुः** ( १२।१०४ )—

"तपो विद्या च विप्रस्य निःश्रेयसकरं परम्। तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते"॥ १९०॥

[ १९१ श्लो. ] **स ह्येत्यादि**। सर्वाश्रमिभिरसावात्मा **समस्तैः** कारणैर्जिज्ञासितव्यः। तान्येव कारणान्याह। **मन्तव्यो** युक्तिभिः **श्रोतव्यो** वेदान्तश्रवणेन। **अथेति** व्यतिक्रमेण। **द्विजातिग्रहणाच्च** शूद्रस्याधिकारः ॥ १९१ ॥

---

१ ब–व। २ ब–चांतक। ३ अ–ण। ४ अ–कि।

[ १९२ श्लो. ] य एवमित्यादि । ये द्विजातयो निर्जनदेशमाश्रिताः एवमुक्तेन मार्गेण **सत्यं ब्रह्मोपासते** ते ब्रह्मप्राप्तिमार्गं प्राप्नुवन्ति । मिताक्षरायां तु 'विन्दति' इति पठित्वा 'जानन्ति' इति व्याख्यानं कृतम् ॥ १९२ ॥

[ १९३ श्लो. ] देवयानमाह । **अग्नेरित्यादि** । ते विदितात्मानः क्रमादग्न्यादि अभिमानि-देवतास्थानेषु मुक्तिमार्गेषु विश्रम्य ताभिः प्रापिताः परमं पदं प्राप्नुवन्ति । **अर्चिर्वह्निः** । अहर्दिनं **शुक्लः** शुक्लपक्षः **उत्तरमयनमुत्तरायणं** देवलोकः सुरसद्म । **सविता** सूर्यः । **वैद्युतं** विद्युत्सहितम् ॥ १९३ ॥

[ १९४ श्लो. ] **तत** इत्यादि । **तानर्चिरागतान्** । मानसः पुरुषः अलौकिकान् करोति । ब्रह्मैव लोको ब्रह्मलोकः । तं गमयति । ततः परमात्मनैकीभवन्ति । अयमर्थः । द्विविधा हि सा मुक्तिः परमुक्तिश्च । ये साक्षात्परब्रह्मोपासकास्ते सद्य एव मुच्यन्ते । ये मायाद्युपासकास्तेऽर्चिरादिकं प्राप्य तत्रैव ज्ञानप्रकर्षमासाद्यार्चिरादिस्थानस्थैः सहिताः परमात्मनैकीभवन्ति ॥ १९४ ॥

**पितृयानमाह**

[ १९५-१९६ श्लो. ] **यज्ञेनेत्यादि** । **पितृलोकमिति** । यज्ञादिना ये स्वर्गलोकभोक्तारस्ते धूमादिचन्द्रपर्यन्तपदार्थाभिमानिनीर्देवताः प्राप्य पुनर्वाय्वादिकमासाद्य शुक्रत्वमवाप्य संसारिणो योनिं व्रजन्ति ॥ १९५-१९६ ॥

[ १९७ श्लो. ] **एतत्** इत्यादि । **दंदशूकः** सर्पः । जन्मान्तरे सर्पादियोनिं प्राप्नोतीत्यर्थः ॥ १९७ ॥

**योगविधिमाह**

[ १९८–२०० श्लो. ] **ऊरुस्थेत्यादि** । **निमीलितेत्यादि** । **सन्नियम्येत्यादि** । **विष्टभ्य** संयोज्य । **सत्वस्थः** कामक्रोधादिरहितः । **तालुस्थाचलजिह्वः** तालूपान्ते निहिताऽचला जिह्वा यस्य स तथा । **द्विगुणं त्रिगुणमिति** । लघुमध्योत्तरीयक्रमेण यथा **मार्कण्डेयपुराणम्** ( ३६।१४–१६ )—

"लघुमध्योत्तरीयाख्यः प्राणायामस्त्रिधोदितः । तस्य प्रमाणं वक्ष्यामि तदलर्क शृणुष्व मे ॥

"लघुर्द्वादशमात्रस्तु द्विगुणः स तु मध्यमः । त्रिगुणाभिस्तु मात्राभिरुत्तरीय उदाहृतः ॥

"निमेषोन्मेषणे मात्रातानो ( कालो ) लघ्वक्षरस्तथा " ॥ इति ॥

[ २०१ श्लो. ] **तत** इत्यादि । **तत** आत्मा हृदये ध्येयस्तत्रात्मनि मनो धारयेत् । स्थिरीकुर्यात् । 'शरीरेन्द्रियमनोबुद्ध्यात्मनां धारणां धारयेत्' इति देवलोक्तां धारणां धारयेत् ॥ २०१ ॥

**अथ योगविभूतयः**

[ २०२–२०३ श्लो. ] **अन्तरित्यादि** । **अन्तर्द्धानं** विनैव व्यवधायकेन शरीराऽदर्शनं **स्मृतिर्जन्मान्तरस्यापि** । **कान्तिः** कमनीयरूपता । **दृष्टिः** परमाणोर्व्यवहितस्य च । **श्रोत्रज्ञता** दूरं सूक्ष्मशब्दोपलंभकत्वम् । **छन्दतः सृष्टिरपेक्षितात्मनामिच्छतो** निष्पत्तिः । **अमृतत्वाय कल्पते** मोक्षाय समर्थो भवति ॥ २०२–२०३ ॥

---

१ ब–विदिता–। २ ब–यान्ति ।

[ २०४ श्लो. ] ब्रह्मध्यानरूपोपासनासमर्थं प्रत्याह । अक्षयेत्यादि । अप्रहतकामस्त्यक्तफलाकांक्षः । स्पष्टमन्यत् ॥ २०४ ॥

[ २०५ श्लो. ] न्यायेत्यादि । तत्त्वज्ञाननिष्ठः ब्रह्मज्ञाननिष्ठः । एवंविधो गृहस्थो मोक्षमाप्नुयात् । तथा च **महाभारते** "कस्येषा वागभवेत्सत्या मोक्षो नास्ति गृहादिति"। स्त्रीशूद्राणामपि मोक्षमाह—

"अपि वर्णावकृष्टस्तु नारी वा धर्मकांक्षिणी । तावप्येतेन मार्गेण गच्छतां परमां गतिम्" ॥२०५॥

इत्यध्यात्मप्रकरणम् ॥

## अथ प्रायश्चित्तप्रकरणम् ५

[ २०६ श्लो. ] इदानीं नैमित्तिकधर्मप्रवृत्त्युपयुक्तां कर्मफलनिष्पत्तिं नरकांश्च दर्शयति । **महापातकेत्यादि** । इह संसारे महापातकादिजनितान् दुःखहेतून् **नरकान्**वक्ष्यमाणाननुभूय **कर्मक्षयात्** वक्ष्यमाणासु योनिषु जायन्ते ॥ २०६ ॥

[ २०७–२०८ श्लो. ] **मृग** इत्यादि । नरकाननुभूय तच्छेषक्षयाय **ब्रह्महादयः** क्रमेण मृगादियोनिषु जायन्ते । नरकानुभवकालमाह **विष्णुः** (४३।२४-२६)—"एतेष्वकृतप्रायश्चित्ता अतिपातकिनः पर्यायेण कल्पं पच्यन्ते । महापातकिनो मन्वन्तरमुपपातकिनश्चतुर्युगम्" इति । एतेषु नरकेषु नरकानुभवकालगौरवान्महापातकादतिपातकं गुरु बोद्धव्यम ॥ २०८ ॥

[ २०९ श्लो. ] **ब्रह्महेत्यादि** । ब्रह्महादयो मृगादियोनिषु दुःखमनुभूय तच्छेषेण क्षय्यादयो जायन्ते । **दुश्चर्मा** लिङ्गदण्डः । यथा **मनुः** ( ११।५२ )—

"एवं कर्मविशेषेण जायन्ते सद्विगर्हिताः । जडमूकान्धबधिरा विकृताकृतयस्तथा" ॥ २०९ ॥

[ २१० श्लो. ] **यो येनेत्यादि** । **यो येन** ब्रह्महादिना सह महापातकादिकं करोति स पूर्वोक्तक्षयादिचिह्नयुक्तो जायते । **आमयावी** मन्दानलः । **वागपहारकः** परकृतश्लोकानां स्वकृतत्वख्यापकः ॥ २१० ॥

[ २११ श्लो. ] **धान्येत्यादि** । तुच्छधान्यस्योत्कृष्टधान्यमिश्रकः । **पिशुनः** परोत्कर्षाऽसहिष्णुः । **तैलपायी** पक्षिविशेषः । **सूचको** नासासंकोचादिना परदोषदर्शकः ॥ २११ ॥

[ २१२ श्लो. ] **परस्येत्यादि** । ऋज्वर्थम् ॥ २१२ ॥

[ २१३ श्लो. ] **हीनेत्यादि** । **हीनजाता**वंत्यजातौ । **पत्रशाकं** वास्तूकादि । **शुभान्** कुंकुमादीन् ॥ २१४ ॥

[ २१४ श्लो. ] **मूषक** इत्यादि । **पयो** दुग्धम् । **उपस्करः** कुण्डभाण्डादिः । **गृहकारी** चटकविशेषः । यानादीनां द्वितीयानिर्देशात् पूर्वश्लोकीयं हृत्वेत्यनुषंजनीयम् ॥ २१४ ॥

[ २१५ श्लो. ] **मधु** इत्यादि । **पलं** मांसम् । **श्वित्री** श्वेतकुष्ठी । **चीरी** झिल्लिका । हृत्वेत्यनुषंजनीयम् । **मनुः** ( १२।६९ )—

"स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः । एतेषामेव जन्तूनां भार्यात्वमुपयान्ति ताः"॥२१५॥

[ २१६ श्लो. ] **प्रदर्शेत्यादि** । प्रदर्शनार्थमिदमुक्तं अन्यदपि मन्वाद्युक्तं बोद्धव्यम् । यथा 'कौशेयं तित्तिरिर्हृत्वा' इत्यादि । यथाऽपहृतद्रव्यप्रकाराः तथापहर्तृप्राणिजातयोऽपि तत्प्रकारा

१ ब—युकानां । २ ब—क्षयरोगी इत्यादयो भवन्ति । ३ ब—स्तु ।

भवन्ति। यथा श्वेतवस्त्रापहारकः श्वेतकुष्ठं यथा रक्तवस्त्रापहारको लोहितमंडलकादि ॥ २१६ ॥

[ २१७ श्लो. ] **यथे**त्यादि। कर्मानतिक्रमेण तत्फलं **तिर्यक्त्व**मनुभूय तावत्कालक्षयात् शुभलक्षणभक्ताच्छादनरहिता **दरिद्राः पुरुषाधमा जायन्ते**। 'ब्रह्महा क्षयरोगी स्यात्' इत्युक्तेन सहास्य समुच्चयः ॥ २१७ ॥

[ २१८ श्लो. ] **तत** इत्यादि। **ततः** कर्मफलोपभोगेनेत्यर्थः। **जायन्ते** शुभकर्मशेषेणेति शेषः ॥ २१८ ॥

[ २१९ श्लो. ] **विहिते**त्यादि। सति सामर्थ्ये **विहितस्य** नित्यस्य सन्ध्योपासनादेरकरणात्। निषिद्धप्राणिहिंसादेः सेवनात् **इन्द्रियाणां** वाऽ**निग्रहात्** शास्त्रनियमितविषयातिरिक्तविषयसेवनात् बहुतरपापानुबन्धित्वाच्च पृथगुपादानम्। **नरः पतनं** नरकं याति ॥ २१९ ॥

[ २२० श्लो. ] **तस्मा**दित्यादि। यस्मादकृतप्रायश्चित्तो नरकं याति तस्मात्कृतपापेन स्वशुद्ध्यर्थं **प्रायश्चित्तं** कार्यम्। **एवमस्यान्तरात्मा** क्षेत्रज्ञो **लोकश्च** निर्विचिकित्सो भवति। प्रायश्चित्तशब्दार्थमाह **अङ्गिराः**—

"प्रायो नाम तपःप्रोक्तं चित्तं निश्चय उच्यते। तपो निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्[1]" ॥२२०॥

[ २२१–२२६ श्लो. ] **प्रायश्चित्तमित्यादि। प्रायश्चित्तैर्यथा** विहितैरकामकृतं नश्यति। तस्मिन्नेव पापे कामतः कृते तेनैव प्रायश्चित्तेनेह लोके व्यवहार्यतामात्रं भवति। स्वल्पपापक्षयाच्चाशेषपापक्षयः कथं तर्हि व्यवहार्यतामात्रमिति चेत्। वचनात्। अयमर्थः—द्विविधं[2] हि पापमुत्पद्यते। शरीरगतमात्मगतं च। तत्र वचनादात्मगतपापसद्भावेऽपि[3] शरीरगतपापनाशे व्यवहार्यता। ब्रह्मवधादिपापशेषोत्पन्नदरिद्रादिशरीरकामकृतमपि प्रायश्चित्तांतरात्। अकामकृतं वेदाभ्यासाद्विनश्यति। तथा च **मनुः**— ( ११।४६ )—

"अकामतः कृतं पापं वेदाभ्यासेन शुध्यति। कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधैः"॥ वेदाभ्यासेनेति कामतः प्रायश्चित्तापेक्षया लघुप्रायश्चित्तोपलक्षणम्। प्रायश्चित्तान्तराणामपि विधानात्। तथा च **स्मृतिः**—

"प्रायश्चित्तमकामानां कामान्नाप्नोति मानवः। विहितं यदकामानां कामात्तद्द्विगुणं भवेत्"॥ अतो वचनादनुपभुक्तफलमपि पापं नश्यतीति नाभुक्तं क्षीयते कर्मेत्यादि प्रायश्चित्तेतरविषयम्॥

[ २२१ श्लो. ] **प्रायश्चित्त**मित्यादि। पापनिरताः प्रायश्चित्तमकुर्वाणाः **अपश्चात्तापिनः** कष्टहेतून् **नरकान्** प्राप्नुवन्ति ॥ २२२ ॥

[ २२२–२२५ श्लो. ] तानेव नरकानाह। **तामिस्र**मित्यादि। **संघे**त्यादि। **अवी**त्यादि। **महे**त्यादि। तस्मादात्मशुद्ध्यर्थं प्रायश्चित्तं कर्तव्यम्। स्पष्टान्येतानि। नरकस्वरूपं **मार्कण्डेय**पुराणादिषु ज्ञेयम् ॥ २२५–२२५ ॥

[ २२७ श्लो. ] **ब्रह्मे**त्यादि। ब्राह्मणमरणफलव्यापारकारी। गौडीपैष्टीमाध्वीरूपत्रिविधमद्यपानकर्ता। पैष्टीमात्रमद्यपः क्षत्रियो वैश्यश्च। ब्राह्मणसुवर्णजातीयस्यापहर्त्ता। गुरुदारगामी। एते चत्वारो महापातकिनः। **यश्च तैः सह** याजनादिरूपसंपर्कं करोति स पंचमः। क्षत्रियादीनामपरमपि महापातकमाह **च्यवनः**—"ब्रह्महत्या सुरापानं गुरुतल्पं ब्राह्मणसुवर्णहरणं द्विजानां महा-

---

१ **ब**—स्थितिः। २ **ब**—कर्मणां पापं द्विविधं भवति। ३ **ब**—प्रायश्चित्तेन शरीरपापनाशात्।

पातकानि । अदण्ड्यदण्डनं युधि पलायनं क्षत्रियस्य । मानतुलाऽनृतत्वं वैश्यस्य । मांसविक्रयणं ब्रह्महत्या ब्राह्मणीगमनं कपिलादुग्धपानं शूद्रस्य ”॥ २२७॥

[ **२२८ श्लो.** ] महापातकसमान्यान्याह । गुरूणामित्यादि । अध्याधिक्षेपोऽधिकोऽधिक्षेपः । **अधीतस्य** वेदस्य नाशनं विस्मरणम् ॥ २२८ ॥

[ **२२९ श्लो.** ] **निषिद्धे**त्यादि । जैह्म्यं धर्मक्रियासु कौटिल्यम् । **उत्कर्षे** स्वोत्कर्षार्थमनृतवचनम् । **रजस्वलामुखास्वादो** रजस्वलागमनम् ॥ २२९ ॥

[ **२३० श्लो.** ] **अश्वे**त्यादि । भूमिहरणं ब्राह्मणभूमिहरणम् ‘ब्राह्मणभूमिहरणं सुवर्णस्तेयसमम्’ ( ३६।३ ) इति विष्णुस्मरणात् । **मनुना** तु रजतमप्यत्र पठितम् ॥ २३० ॥

[ **२३१ श्लो.** ] **सखी**त्यादि । सख्युर्भार्यासु **कुमारीषु** ब्राह्मणकन्यासु **स्वयोनिषु** स्वकुलोत्पन्नासु **अन्त्यजासु** चाण्डालादिस्त्रीषु । **स्वगोत्रासु सुतस्त्री**ष्वरुद्धास्वपि ॥ २३१ ॥

[**२३२-२३३ श्लो.**] **पितु**रित्यादि। **आचार्ये**त्यादि । **स्नुषां** पुत्रभार्याम् । **छित्वा लिंगमिति** ब्राह्मणव्यतिरिक्तविषयम् । **सकामायाः स्त्रियास्तथेति** । अत्युत्कटकामितया अकामयमानं पुरुषं या प्रवर्तयति तस्या अप्येतादृशं कार्यम् । अत एव दण्डप्रकरणे **नारदः** (१२।७३-७५)—
“माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा । पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
“दुहिताचार्यभार्या च सगोत्रा शरणागता । राज्ञी प्रव्रजिता धात्री तथा वर्णोत्तमा च या ॥
“आसां अन्यतमां गत्वा गुरुतल्पग उच्यते। शिश्नस्योत्कर्तनात्तत्र नान्यो दण्डो विधीयते”॥२३३॥

**उपपातकान्याह**

[ **२३४ श्लो.** ] **गोवधे**त्यादि । गोः प्राणवियोगः। **व्रात्यता** यथाकालमनुपनयनम्। असोमयाजित्वं च । **स्तेयम**श्वसुवर्णरत्नादिव्यतिरिक्तस्य सारद्रव्यस्य। **ऋणानां** देवर्षिपितृसम्बन्धिनाम् यज्ञाध्ययनप्राजापत्यकरणम् । **अनाहिताग्निता** सत्यधिकारे । **अपण्यस्य** मांसादेः सकृदपि **विक्रयः** । **परिवेदनं** ज्येष्ठेऽकृतदाराग्निहोत्रे दाराग्निग्रहणम् ॥ २३४ ॥

[ **२३५ श्लो.** ] **भृता**दित्यादि । मूल्येनाध्ययनमध्यापनं च । **वार्द्धुष्यम**नापदि । **लवणक्रिया** वानप्रस्थेतरस्य । “ तस्य च लवणं चेत्स्वयंकृतम् ” इति विधानात् ॥ २३५ ॥

[ **२३६ श्लो.** ] **स्त्री**त्यादि । **स्त्री** द्विजातीयाऽपकृष्टा । **निन्दितार्थोपजीवनं** वर्त्तमानमूल्याद्धिकमूल्यग्रहणम् । **नास्तिक्य**मदृष्टाभावबुद्धिः । **व्रतलोपो** ब्रह्मचारिणो मैथुनम् । **सुताना**मनेकविधानामपि ॥ २३६ ॥

[ **२३७ श्लो.** ] **धान्ये**त्यादि । **कुप्यं** ताम्रकांस्यादि । **अयाज्याः** पातकिशूद्रादयः । **आरामस्य** सर्वार्थं कृतस्य ॥ २३७ ॥

[ **२३८ श्लो.** ] **कन्ये**त्यादि । **कन्यादूषण**मंगुल्या योनिविदारणम् । परिवेदकयाजनम् । विवाहादौ **तस्यैव** परिवेदकस्यैव **कन्यादानम्**। **कौटिल्यं** मित्रपुत्रादौ। **व्रतलोपनं** व्रतत्यागः॥२३८

[ **२३९ श्लो.** ] **आत्मे**त्यादि । अनातुरस्य देवाद्यनुद्देशेन पाकाद्यनुष्ठानम् । मद्यपस्त्रीगमनं द्विजानामुपपातकम् । स्वाध्यायत्यागोऽत्र विस्मरणपर्यन्तः । **बान्धवत्यागः** सति विभवे पित्रादीनामपोषणम् ॥ २३९ ॥

---

१ **ब**–समानि । २ **अ**–ध्यापेक्षा । ३ **ब**– ब्राह्मणेतरपरम् । ४ **अ**–त्वा । ५ **ब**–पितृव्या ।

[ **२४० श्लो.** ] **इन्धनार्थमिति** । इन्धनार्थमार्द्राऽश्वत्थादिकर्त्तनम् ' इन्धनार्थमशुष्काणाम् ' इति वचनात् । **स्त्रीजीवनं** वेश्यारूपेण । **हिंसया** प्राणिवधेन । **यन्त्रविधानं** प्राणिवधार्थम् । **व्यसनानि** मृगयादीनि ॥ २४० ॥

[ **२४१ श्लो.** ] **शूद्रेति** । शूद्रभृत्यता । **हीनयोनिः** चाण्डाल्यादिः । ब्रह्मचार्यीग्रग्रहणं अश्रोत्रियान्नपुष्टता ॥ २४१ ॥

[ **२४२ श्लो.** ] **असदित्यादि** । बौद्धादिशास्त्राभ्यासः । सुवर्णादिस्थानेषु राजाज्ञयाऽधिष्ठानम् । **भार्याया** अपरिणीताया अपि विक्रयः ॥ २४२ ॥

[ **२४३ श्लो.** ] यथोद्देशेन ब्रह्मवधादिप्रायश्चित्तमाह । **शिर** इत्यादि । " ब्राह्मणं हत्वा तस्यैव शिरः कपालमादाय " इति **शातातप**वचनात् घातितब्राह्मण**शिरःकपाली** । तदभावेऽन्यस्यापि ब्राह्मणस्य ' कृत्वा शवशिरोध्वजम् ' इति ( ११।७२ ) **मनु**वचनात् । शवशिरोन्वितो ध्वजयुक्तः । ध्वजोऽत्र खट्वांगरूपः । वन्याहारासमर्थो ग्रामं प्रविश्य भिक्षार्थी ब्राह्मणहननं ख्यापयन् मुन्यंतरोक्तमृन्मयपात्रादिना मितान्नभोजी ब्रह्महा ब्राह्मणो द्वादशे वर्षे शुद्धिमाप्नोति । एतच्च निर्गुणब्राह्मणेनाबुद्धिपूर्वं सगुणब्राह्मणवधे बोद्धव्यम् । बुद्धिपूर्वमपि सगुणाततायिब्राह्मणवधे जातिमात्रब्राह्मणवधे च । यथा **भविष्ये**—

"ब्राह्मणो ब्राह्मणं हत्वा जातिमात्रो गुणान्वितम् । प्रायश्चित्तमिदं कुर्यादिकं पापविशुद्धये ॥
"ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत् । अबुद्धिपूर्वं भिक्षाशी कृत्वा शवशिरोध्वजम्"॥

तथा—

" हत्वा तु प्रहरन्तं वै ब्राह्मणं वेदपारगम् । कामतोऽपि चरेद्वीर द्वादशाख्यमनुत्तमम् ॥
" ब्राह्मणं जातिमात्रं वै कामतोऽपि निपात्य च । चरेद्द्वादशवर्षाणि हन्ता निर्गुण एव च " ॥

यदा त्वेकं निमित्तमाश्रित्य एकदा द्वौ बहून् वा ब्राह्मणान् हन्यात्तदाऽप्येकमेव प्रायश्चित्तं नावृत्त्या । यथा—

" एककालं यदा हन्याद्युगपत्सुरनन्दन । निमित्तमेकमाश्रित्य हेतुनैकेन वा विभो ॥
"ब्राह्मणं ब्राह्मणो वीर ब्राह्मणान् सुबहूनपि । निहत्य युगपद्वीर एकं प्राणान्तिकं चरेत्"॥२४३-२४६॥

[ **२४७ श्लो.** ] **लोमेत्यादि** । लोमभ्यस्त्वचे लोहिताय मेदसे मांसेभ्यः स्नायुभ्य अस्थिभ्यो मज्जाभ्यः स्वाहेति प्रत्येकमुक्त्वा प्रत्येकमाहुतित्रयमष्टाभिर्मन्त्रैर्लोमादिक्रमेण गृह्योक्तविधिनाऽग्निमुपसमाधाय मज्जापर्यन्तां तनुं जुहुयात् । ततोऽवाक्शिरास्तस्मिन्नेवाग्नौ प्रविशेत् । एतच्च बुद्धिकृतक्षत्रियस्य चतुर्वेदविद्ब्राह्मणवधे द्रष्टव्यम् । यथा क्षत्रियानुवृत्तौ **भविष्ये**—

" चतुर्वेदविदं वीर ब्राह्मणं चाग्निहोत्रिणम् । निहत्य कामादात्मानं क्षिपेदग्नाववाक्शिराः " ॥

[ **२४४ श्लो.** ] **ब्राह्मेत्यादि** । ब्राह्मणस्यैकस्यानेकस्य वा जलाग्न्यादिपीडितस्य रक्षणात् । ब्राह्मणेषु निवेधाश्च मेधाऽवभृतस्नानाद्वा शुद्धिमाप्नोति । यज्ञान्तरावभृथस्नानेऽप्येतदेवाह **गौतमः** ( ९।१० )—" अश्वमेधावभृते अन्ययज्ञेऽप्याग्निष्टुदंतश्च " इति ॥ २४४ ॥

[ **२४५ श्लो.** ] **दीर्घेत्यादि** । आरब्धद्वादशवार्षिक एकं तीव्रव्याधिपीडितं ब्राह्मणं गां वा औषधादिना व्याधिरहितं कृत्वा असमाप्तद्वादशवार्षिकव्रत एव शुद्धिमाप्नोति । पूर्वं प्राणत्यागद्वारेणापि त्राणं इह तु न तथेत्यपौनरुक्त्यम् । "ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान् परित्यजेत्" इति ( ११।७९ ) **मनु**वचनात् ॥ २४५ ॥

---

१ ब–परि– । २ अ–ति ।

[ **२४६ श्लो.** ] **आनीये**त्यादि । चौरहृतं ब्राह्मणद्रव्यं युद्धेन विजित्यानीय शुध्यति । अथवा शस्त्रैस्त्रीन् वारान् घातितस्तन्निमित्तं च शस्त्रक्षतो जीवन्नप्यनानीयापि कृतयुद्धः शुध्यति। प्रक्रान्तत्वात् द्वादशवर्षस्येतद्बोद्धव्यम् ॥ २४६ ॥

[ **२४७ श्लो.** ] **अरण्य** इत्यादि । प्रक्रान्तत्वात् द्वादशवार्षिक एव व्रतचरणासमर्थ अरण्ये अष्टग्रासादिपरिमितभोजी स्ववेदसंहितां मंत्रात्मिकां त्रिर्जपित्वा शुध्यति । संहिताग्रहणं पदक्रमनिरासार्थम्। अथवा मिताहार एव यत्र देशे सरस्वत्याः प्रतिस्रोतस्तं विनशनाख्यं देशं गत्वा सरस्वत्यां स्नात्वा शुध्याति ॥ २४७ ॥

[ **२४८ श्लो.** ] **संग्राम** इत्यादि । **संग्रामे** काण्डाद्यस्त्रधारिणो **लक्ष्यभूतः** शस्त्रादिहतः शुद्धिमाप्नोति । यदि कथंचिदायुःकर्मवशेन जीवति तदापि शुध्यति । प्राणनिरपेक्षप्रवृत्तत्वात् । कामतः क्षत्रियकृतब्रह्मवधविषयमिदम् । यथा **भविष्ये**—

"क्षत्रियो निर्गुणो वीर ब्राह्मणं वेदपारगम्। निहत्य कामतो वीर लक्ष्यं शस्त्रभृतो भवेत्"॥२४८॥

[ **२५० श्लो.** ] **पात्र** इत्यादि । विद्यावृत्तसंपन्ने ब्राह्मणे यावज्जीवनिर्वाहसमर्थं **धनं दत्वा** शुद्धिमाप्नोति । तत्प्रतिग्रहीतुश्च निषिद्धप्रतिग्रहजनितपापक्षयार्थं **वैश्वानरी** इष्टिः स्मृता । एतच्च वेदाग्निरहितधनवद्ब्राह्मणेन बुद्धिपूर्वं जातिमात्रब्राह्मणवधे । तथा च **भविष्ये**—

"जातिमात्रं यदा हन्याद्ब्राह्मणायोपपादयेत् । धनं वा जीवनायालं गृहं वा सपरिच्छदम् "॥

ब्राह्मणस्य यदुक्तं प्रायश्चित्तं तत् क्षत्रियादीनां द्विगुणं त्रिगुणं चतुर्गुणं बोद्धव्यम् । यथा **भविष्ये**—

"पर्षद्विधानमत्रैव प्रोक्तमाङ्गिरसेन तु । द्विगुणा क्षत्रियाणां तु वैश्यानां त्रिगुणा हि सा ॥

"चतुर्गुणा तु शूद्राणां पर्षदुक्ता महात्मना । पर्षद्वच्च व्रतं प्रोक्तं शुद्धये पापकर्मिणाम् ॥

"अनेन ज्ञायते विप्र वर्णानामुत्तमाद्दते ।

"अधमानां तु वर्णानामुत्कृष्टहनने गुह । गुरौ गुरुतरं[२] ज्ञेयं क्षत्रादीनामसंशयम्" ॥ २५० ॥

[ **२५१ श्लो.** ] **यागे**त्यादि । सोमयागस्थक्षत्रियवैश्यवधे ब्रह्महाणि यद्व्रतं तच्चरेदित्यर्थः ॥ **यथावर्णमिति** । यद्वर्णो वत्सगर्भस्तद्वर्णोपदिष्टमेव प्रायश्चित्तं चरेत् । आत्रेय्या वधे विशेषः । आत्रेयी तावत्त्रिविधा जन्मप्रभृति संस्कारसंस्कृता गर्भिणी ऋतुमती अत्रिगोत्रा च। यथाह **यमः** —

"जन्मप्रभृतिसंस्कारैः संस्कृता ब्रह्मवर्च्च[३] या । गर्भिणी या ऋतुमती तामात्रेयीं विनिर्दिशेत्" ॥

**विष्णुः** ( ५०।९ )— 'अत्रिगोत्रां वा नारीं मित्रं वा' इति ॥ २५१ ॥

[ **२५२ श्लो.** ] **चरेदि**त्यादि । यो यद्वर्णवधार्थं कृतखङ्गादिधारणः स तद्वर्णवधोपदिष्टं व्रतं दैवादजातेऽपि मरणे कुर्यात्। अत्र व्रतमात्रातिदेशात् "आतिदेशिकमुक्तानामुक्तं चान्द्रायणत्रयम्"इति **भविष्यपुराणोक्तं** चान्द्रायणत्रयं बोद्धव्यम् । **सवनस्थे** सोमयागस्थे **ब्राह्मणे** हते ब्रह्मवधोक्तं **द्विगुणं** व्रतमादेष्टव्यम् । यथा ब्राह्मणदाने फलविशेषस्तथा प्रायश्चित्तेऽपि । यथा **दक्षः**—"दत्तं द्विगुणसाहस्रमनन्तं तु यथाक्रमम्। दाने फलविशेषः स्याद्धिंसायां तावदेव तु"॥२५२॥

[ **२५३ श्लो.** ] **सुरांबुभृते**त्यादि । ज्ञानपूर्वो ब्राह्मणः **सुरां** पैष्टीं पीत्वा सकृदप्यास्वाद्य पञ्चानामन्यतममग्निसान्निधं तप्तं पीत्वा मरणाच्छुद्धिमिच्छति। 'अग्निवर्णां पिबेद्द्विजः' इति (२०।२२)

१ ब–दोषो । २ ब–रो—यः—। ३ ब–र्चसा ।

**वशिष्टेन** द्विजग्रहणात् अनुपनीतस्य न मरणान्तिकं प्रायश्चितम् । एतदेव विशेषत उक्तं **भविष्ये**–
" प्रायेण धर्मशास्त्रेषु सर्वेष्वेव नराधिप । मतिपूर्वे सुरापाने प्राणान्तिकमुदाहृतम् ॥
"पैष्टीपाने तु ऋषिभिर्नेतरस्यां कदाचन" ॥ तथा —
"गौडीमज्ञानतः पीत्वा ब्राह्मणोऽब्राह्मणप्रियः । तप्तकृच्छ्रं तु वै कृत्वा पुनः संस्कारतः शुचिः॥
"माध्वीं पीत्वा महाबाहो अज्ञानाद्विजसत्तमः । शुध्यते तप्तकृच्छ्रेन विकर्मभ्यसनात्तथा ॥
"मतिपूर्वं यदा गौडीं पिबेद्विप्रः सुराधिप । तदा चान्द्रायणं कुर्याद्गां च दद्याद्विजोत्तमे" ॥२५३॥

[ २५४ श्लो. ] **वालवासेति** । वालरचितपरिधानो ब्रह्महत्त्याव्रतं द्वादशवार्षिकं वा चरेत् । अथवा तिलकल्कं तण्डुलादिकणान् वा रात्रौ वर्षमेकं भक्षयेत् । " एतदेव व्रतं कुर्यान्मद्यपः कृतछर्द्दनः " इति **व्यासवचनात्** कृतसुरावमनेनेदं कर्त्तव्यम् ॥ २५४ ॥

[ २५५ श्लो. ] **अज्ञानादित्यादि** । अज्ञानतः सुरादिकं भक्षयित्वा द्विजातयः पुनरुपनयनमर्हन्ति । एतत्तप्तकृच्छ्रपूर्वकम् । यदाह **गौतमः** ( २३।२-३ )—" अमत्या पाने पयोघृतमुदकं वायुः प्रतिभ्यहं तप्तमिति तप्तकृच्छ्रस्ततोऽस्य संस्कारः । मूत्रपुरीषरेतसां प्राशने च वपनं मेखला दण्डो भैक्षचर्याव्रतानि च " । " निवर्तन्ते द्विजातीनां पुनः संस्कारकर्माणि " इति (९।१५१) **मनुवचनाद्यपि** वपननिवृत्तिस्तथापि " सशिखं वपनं कृत्वा पुनः संस्कारमर्हति " **इत्यंगिरोवचनादत्र** वपनं बोद्धव्यम् ॥ २५५ ॥

[ २५६ श्लो. ] **पतिलोकमित्यादि** । या ब्राह्मणी सुरां पिबेत्सा पत्या सह धर्मचरणेन योऽर्जितः **स्वर्गादि** स्वर्गादिलोकस्तं न याति । मृता सती इह संसारे श्वादियोनिषु जायते । **वशिष्ठोऽपि (२१।११)**–" या ब्राह्मणी सुरापी न तां देवाः पतिलोकं नयन्ति " इति ॥२५६॥

[ २५७ श्लो. ] **ब्राह्मण** इत्यादि । विप्रसम्बन्धिस्वर्णहरणे कामतः कृते **राज्ञे** आयसं **मुशलमर्पयेत्** । तेन मुशलेन राजा सकृदेव हन्यात् । तत्प्रहारेण मृतो जीवितो वा शुध्येत् । **शातातपः**—" कामतस्तु कृतं यस्मान्नान्यथा शुद्धिमर्हति " ॥ **मनुः** ( २१।१०० )—
" गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम् । वधेन पूयते स्तेनो ब्राह्मणस्तपसैव वा " ॥
एवकारो ब्राह्मणवधनिषेधार्थः । वाशब्दो दण्डविकल्पार्थः । यथा **यमः**—
" ब्राह्मणस्यापराधे तु चतुर्द्धैव विधीयते । शिरसो मुण्डनं दण्डः पुरान्निर्वासनं तथा ॥
" प्रख्यापनार्थं पापस्य प्रयाणं गर्दभेन च । ललाटे चांककरणं कुर्याद्राजा यथाविधि " ॥
तथा **भविष्ये**—
" यदेतद्वचनं वीर ब्राह्मणस्तपसैव वा । तत्रैव करणाद्विद्धि ब्राह्मणस्य सुराधिप ॥
"तपसैवेत्यनेनेह प्रतिषेधो वधस्य तु " ॥

**तथा**—
" वाशब्दग्रहणाद्वीर तपो वा ब्राह्मणस्य तु । दण्डो वा कीर्तितस्तज्ज्ञैर्न वधस्तु कदाचन" ॥
अत्यन्तगुणवदग्निहोतृब्राह्मणस्य सानुबन्धं प्रचुरसुवर्णापहारे निर्गुणस्य वध एव । यथा **भविष्ये**—
"ब्राह्मणस्य गुणाढ्यस्य हृत्वा विप्रस्तु निर्गुणः । प्रभूतं सानुबन्धं च स शुध्येत कटाग्निना" ॥२५७॥

[ २५८ श्लो. ] अनाख्याये[1]त्यादि । राजनि निवेदनं विनैव द्विजः शुद्धिमिच्छन् 'वाल-वासा जटी' इत्यादि श्लोकोक्तं द्वादशवार्षिकव्रतं यत्सुरापस्य तदाचरन् शुध्येत । असमर्थस्तु आत्मतुलितं सुवर्णं दद्यात् । आरब्धदशवार्षिकव्रतो यदि तदाचरणासमर्थो यावता सुवर्णेन विप्रतुष्टिस्तावद्दद्यात् ॥ २५८ ॥

[ २५९ श्लो. ] ततेऽग्र इत्यादि । गुरुतल्पगो मातृव्यतिरिक्तगुर्वङ्गनागामी प्राणात्ययहेतु-तापयुक्ते लोहमये शयने लोहनिर्मितया प्रतिमया वा ज्वलन्त्या सह सुप्यात् । यथा संवर्तः—

"ख्यापयन् गुरुतल्पं तु तल्पे सुप्यादयोमये। सोऽवगूहेत दीप्तात्मा स्त्रियं कालायसीं कृताम्" ॥

अथ आयसशयनायसालिङ्गनयोर्विकल्पः । अथवा शिश्नवृषणौ क्षुरेण छित्वाऽञ्जलौ गृहीत्वा नैर्ऋत्यां दिशि अकुटिलगतिं कुर्वन् तनुं त्यजेत् । यद्यप्यत्र गुरुतल्पपदान्माताऽपि ग्रहीयते तथापि ज्ञानतो मातृगमने प्रायश्चित्ताभाव एव । अज्ञानतोऽपि विष्णवाद्युक्तप्राणान्तिकमेव प्रति-पत्तव्यम् (३४।१-२)—'मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि'

"अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम्। न ह्यन्या निष्कृतिस्तेषां विद्यते हि कथंचन" ॥

तथा संवर्तः—

"मातरं यदि गच्छेत्तु स्नुषां वा पुरुषाधमः । न तस्य निष्कृतिं विन्द्यात् स्वकां दुहितरं तथा" ॥

निष्कृतिरत्र लोकसंव्यवहार्यता । एतन्महापातकादप्यतिगुरु। अत एव विष्णुः (४३।२४)— "एतेष्वकृतप्रायश्चित्ता अतिपातकिनः कल्पं पच्यन्ते मन्वन्तरं महापातकिनः उपपातकिनश्चतु-र्युगम्" इति । अतिपातके च नरकगौरवमवगम्यते ॥ २५९ ॥

[ २६०–२६१ श्लो. ] प्राजापत्यमित्यादि । एतत्प्रायश्चित्तद्वयमसवर्णसदोषगुरुभार्यागमने वेदितव्यम् ।

एभिरित्यादि । एवं ब्राह्मणादिभिश्चतुर्भिः प्रत्येकं मिलितैर्वा ज्ञानतो यः संवत्सरं संवसेत् संसर्गं करोति सोऽपि तत्समः । तथा च देवलः—

"पतितेन सहोषित्वा जानन्संवत्सरं नरः । मिश्रितस्तेन सोऽब्दान्ते स्वयं च पतितो भवेत्" ॥

संसर्गप्रकारमाह देवलः—

"एकशय्यासनं पंक्तिभाण्डपक्वान्नमिश्रणम् । याजनाऽध्यापनं योनिस्तथा च सहभोजनम् ॥

"नवधा संकरः प्रोक्तो न कर्त्तव्योऽधमैः सह" ॥

हारीतोऽपि—

"आलापाद्गात्रसंस्पर्शान्निश्वासात्सहभोजनात् । एकयानासनाभ्यां च पापं संक्रमते नृणाम्"॥

तत्र याजनादिचतुष्कस्य सद्यःपातकहेतुत्वमाह देवलः—

"याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम् । कृत्वा सद्यः पतन्त्येव पतितेन न संशयः"॥

एतेषामेव संवत्सरेण पातकहेतुत्वमाह मनुः ( ११।१८० )—

"संवत्सरेण पतति पतितेन न संशयः । याजनाऽध्यापनाद्यौनान्न तु यानासनाशनात्" ॥

ज्ञानाऽज्ञानाभ्यां व्यवस्थोक्ता कूर्मपुराणे—

"याजनं योनिसम्बन्धं स्वाध्यायं च तथैव च । कृत्वा सद्यः पतेज्ज्ञानात् सहभोजनमेव च ॥

"अज्ञानाद्यस्तु कुरुते सहैवाध्ययनं द्विजः । संवत्सरेण पतति सहाध्यापनमेव च" ॥

---

[1] शूलपाण्युद्धृतपाठः । इतरपुस्तकेषु 'अनिवेद्य' इति पठितम् ।

' यानासनादशनात् ' इति अनुवचने त्रयाणां यानादीनां द्वंद्वनिर्देशात् मिलितानां लघुसंसर्गाणामज्ञानाद्वत्सरेण पातहेतुत्वं ज्ञानतः षण्मासेन । प्रायश्चित्तविशेषमाह व्यासः—

"यो येन संपिबेद्वर्षं सोऽपि तत्समतामियात् । पादन्यूनं चरेत्सोऽपि तस्य तस्य व्रतं द्विजः" ॥२६०॥

[ २६१ श्लो. ] **कन्यामित्यादि** । एषां पतितानामकिंचनामलंकारादिपितृधनरहितां **कन्यामुद्वहेत्** । तथा च **वशिष्ठः** ( १३।५१-५६ )—"पतितोत्पन्नः पतितो भवेदन्यत्र स्त्रियाः । सा हि परगामिनी । तामरिक्थामुपेयात्" । "अशुचि शुक्रोत्पन्नानामिच्छतां प्रायश्चित्तं पतनीयानां तृतीयो भागः स्त्रीणामंशास्त्रितीय" इति (२।१।५१) **बौधायनदर्शना**दिच्छया प्रायश्चित्तमपि कारणीया । महापातकसमानानामप्येतादृशानि प्रायश्चित्तानि वेदितव्यानि । यथा **विष्णुः** (३६।१-८)—"यागस्थक्षत्रियस्य वधो वैश्यस्य रजस्वलायाश्चान्तर्वत्न्याश्चात्रिगोत्रायाश्चाविज्ञातगर्भस्य शरणागतघातनं ब्रह्महत्यासमानि । कौटसाक्ष्यं सुहृद्वध इत्येतौ सुरापानसमौ । ब्राह्मणभूमिहरणं सुवर्णस्तेयसमम् । पितृपितृव्यमातामहमातुलश्वशुरनृपपत्न्यभिगमनं गुरुदारगमनसमम् । पितृस्वसृमातृस्वसृगमनं च । श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनं स्वसृसख्याः सगोत्राया उत्तमवर्णाया अन्त्यजायाः कुमार्या रजस्वलायाः शरणागतायाः प्रव्रजितायाश्च । अनुपातकिनस्त्वेते महापातकिनो यथा । अश्वमेधेन शुध्यन्ति तीर्थानुसरणेन वा" ॥ पत्नीशब्दोऽत्र लक्षणया स्त्रीमात्रपरः । मुख्यभार्यागमनस्य महापातकत्वात् । तथा द्वादशवार्षिकव्रतानुवृत्तौ **शंखः**—

"कौटसाक्ष्यं तथैवोक्त्वा निःक्षेपमपहृत्य च । एतदेव व्रतं कुर्याद्धत्वा च शरणागताम्" ॥२६१॥

[ २६२ श्लो. ] **चान्द्रेत्यादि** । **अवकृष्टान्** विलोमजान् मागधादीन् बुद्धिपूर्वं हत्वा **चान्द्रायणं चरेत्** । जपहोमादिरहितः शूद्रः कालेन द्वादशवार्षिकादिना शुध्यति । तथा च **शंखलिखितौ**—"कृच्छ्राणि द्विजातीनामेव नावरस्य कामं धर्मेच्छोरप्रतिषेधः" इति । द्विजातीनामेव मन्त्रजपहोमादिवन्ति कृच्छ्राणि न शूद्रादेर्मन्त्ररहितत्वात् । धर्मेच्छोः पापशुद्धिकामस्य शूद्रादेरपि कृच्छ्रमात्रनिषेधः । **तथांगिराः**—

" तथा शूद्रं समासाद्य सदा धर्मपुरःसरम् । प्रायश्चित्तं प्रदातव्यं वेदमन्त्रविवर्जितम्" ॥२६२॥

[ २८५ श्लो. ] **मिथ्येत्यादि** । मिथ्याभिशापं वदतो मिथ्याभिशापदोषो द्विगुणो भवेत् । विद्यमानदोषसंख्यापयन् तद्दोषसमादोषः । किं च **मिथ्याभिशस्तदोषं च मृषा वदन्** समादत्ते **यमः**—

" प्रत्यक्षं वा परोक्षं वा पतितं यदि पश्यति । प्रत्यादेशो न कर्तव्यो रक्षेदात्मानमात्मना ॥
"यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात् । तानि पुत्रान्पशून्घ्नन्ति तेषां मिथ्याभिशंसिनाम्" ॥
॥ २८५ ॥

[ २६३ श्लो.] **पञ्चेत्यादि** । निधानमन्तरे **गोघ्नो मासं पंचगव्यं पिबेत्** । ब्रह्मचर्ययुक्तश्चासीत । मासान्ते गोदानेन शुध्यति । पंचगव्यपाने चाहारान्तरं न कार्यम् । "गोघ्नः पञ्चगव्याहारः पञ्चविंशतिरात्रमुपवसेत्" इति **शंखवचनात्** । **स्मृत्यन्तरोक्तमसमविरुद्धमप्यत्रानुष्ठेयम्** ।

---

१ अ—नृ । २ एष श्लोक इतरपुस्तकेषु २८५ अंकितः शूलपाणिनाऽत्र पठितः ।

शातातपः—"गोमतीं च जपेद्विद्याम्" इति । ब्रह्मपुराणे—

"आदौ गोपतये दत्वा गोमूल्यं साधु कल्पितम् । यथोत्पन्नेन तस्यास्तु चर्मणा छन्नविग्रहः" ॥

विश्वरूपेण 'गोष्ठे शय' इति पठितम् । तदेतत् क्षत्रियस्वाम्यादिगोवधे बुद्धिपूर्वके वेदितव्यम् ॥ २६३ ॥

[ २६४ श्लो. ] कृच्छ्रामित्यादि । अतिकृच्छ्रं प्राजापत्यं कृच्छ्रं वक्ष्यमाणम् । पुनर्मीलितं पूर्वोक्तविषये कुर्यात् । अथवा त्रिरात्रमुपोष्य वृषभैकसहिता दश गा दद्यात् । अन्याद्विभिश्चतुर्थकालभोजनादिना मासत्रयादिसाध्यगोवधप्रायश्चित्तमुक्तम् । तद्विधानं स्पष्टमाह बृहस्पतिः — "शस्त्रादिना तु हत्वा गां मानवं व्रतमाचरेत्" ।

मानवमाङ्गिरसमापस्तम्बोक्तमेव वा—

"पादं चरेद्रोधवधे कृच्छ्रार्द्धं रोधघातने । अतिवाहे च पादोनं कृच्छ्रमज्ञानताडने ॥

"गर्भिणीं कापिलां दोग्ध्रीं होमधेनुं च सुव्रताम्" ॥ रोधादिना गोवधे कृच्छ्रपादादिकं ज्ञानत आंगिरसमापस्तम्बोक्तं वा । विशेषमाह पराशरः—

" धुर्य्येषु वहमानेषु दण्डेनाभिहतेषु च । काष्ठलोष्ठैर्हते वापि पाषाणेन तु ताडितः ॥

"दिनैः कतिपयैश्चापि मृतो वा सद्य एव च । एवं गवां च धुर्याणां प्रवक्ष्यामि यथाविधि ॥

"ताडितस्तु यदा गच्छेत्पञ्चसप्तपदानि वा । ग्रासं वा यदि गृह्णाति तोयं वा पिबति स्वयम् ॥

"पूर्वव्याधिविनष्टानां प्रायश्चित्तं न विद्यते"॥अन्यानि च स्मृत्यन्तरोक्तानि लघुगुरुप्रायश्चित्तानि हन्तृगुणयोग्यतातारतम्येन व्यवस्थेयानि ॥ २६४ ॥

[ २६५ श्लो. ] उपेत्यादि । उक्तेन गोवधप्रायश्चित्तेन उक्तोपपातकेष्वन्येषु प्रतिपदोक्तक्षत्रियादिगोवधव्यतिरिक्तेषु शुद्धिर्भवेच्चान्द्रायणेन वा । मासं दुग्धपानेन पराकेण वा । एतच्च ज्ञानतः कृते । अमीषां शक्त्यपेक्षो विकल्पः । 'सोमविक्रयी प्राजापत्यम्' इत्यादिपैठीनस्याद्युक्तप्रायश्चित्तानि ज्ञानाज्ञानशक्त्यनुबन्धापेक्षया व्यवस्थेयानि। यत्तु शंखलिखिताभ्यां 'हिरण्यस्तेनो मासं गोमूत्रयावकं पिबेत्' इत्युपपातकप्रायश्चित्तं पठितं तद्ब्राह्मणेतरसुवर्णहरणविषयम् । ब्राह्मणसुवर्णहरणस्य महापातकत्वात् ॥ २६५ ॥

[ २६६ श्लो. ] वृषभेत्यादि । एतद्वृषभाधिकगोसहस्रदानं वर्षत्रयमहाव्रताचरणं च ब्राह्मणस्य मतिपूर्ववृत्तस्थक्षत्रियवधे वेदितव्यम् । तथा मनुः ( ११।१२७,१२६ )—

"अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः । वृषभैकसहस्रा गा दद्याच्छुध्यर्थमात्मनः" ॥

तथा—

" तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः । वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडश "॥

यत्तु गोतमेन (२२।१४)–"राजन्यवधे षाड्वार्षिकं प्राकृतं ब्रह्मचर्यं वृषभैकसहस्रा गाश्च दद्यात्" इति समुच्चय उक्तस्तद्ब्राह्मणजातवृत्तस्थक्षत्रियवधे । नृपतिरूपक्षत्रियवधे । विष्णुः (५०।११)—

" नृपतिवधे महाव्रतमेतद्द्विगुणं कुर्यात्" इति ॥ २६६ ॥

[२६७ श्लो.] वैश्येत्यादि । वृत्तस्थवैश्यवधे एतदेव महाव्रतं वर्षमेकं ब्राह्मणश्चरेत् । अथवा गवां वृषभैकशतं दद्यात्।एवंविधशूद्रवधे एतदेव व्रतं षण्मासानाचरेत्। अथवा धेनूर्दश दद्यात्॥२६७॥

१ ब–छि । २ अ–काष्ठेन लेष्टुना ।

[ २६८ श्लो. ] दुर्वृत्तेत्यादि । अनियतपुरुषगामिनीर्ब्राह्मण्यादिस्त्रियो हत्वा हत्यानुसारेण यथाक्रमं दद्यात् । दृतिश्चर्मपुटं बस्तश्छागः । तथा मनुः ( ११।१३८ )—

"जीनकार्मुकबस्तावीन् पृथग्दद्याद्विशुद्धये । चतुर्णामपि वर्णानां नारीर्हत्वाऽनवस्थिताः" ॥

जीनं चर्म । २६८ ॥

[ २६९ श्लो. ] अप्रेत्यादि । अज्ञानतो गुणहीनब्राह्मणमात्रपत्नीं हत्वा शूद्रहत्याव्रतम् गुणिनः स्त्रीवधे यमः—

" आहिताग्नेर्द्विजातेस्तु हत्वा पत्नीमनिन्दिताम् । ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव च ॥

" अनाहिताग्निपत्नीनां ब्रह्मविट्क्षत्रयोषिताम् । गोघातकव्रतं कुर्याच्छूद्रायां चैव नित्यशः"॥

अस्थिमतां ज्येष्ठिकादीनां सहस्रं हत्वा अनस्थिमतां क्षुद्राणां अनः शकटं तत्पूरणपरिमितं च हत्वा शूद्रहत्याव्रतमाचरेत् । विशेषमाह यमः—"अत ऊर्ध्वं कृमिकीटपतङ्गपिपीलिकाभ्रमरदंशमशकादीनामनस्थिमतां सहस्रं हत्वा शूद्रवधः । कोकिलशुकादीनां पुरुषभारवधे शूद्रवधः । तपचितावयवकीटादिविषयमिदम् । मार्जारगोधानकुलमण्डूकश्च पतत्रिण " इत्यादि । पतत्रिषु विशेषमाह बौधायनः (१।१०।२८)—"हंसभासबर्हिणचक्रवाककाकोलूकमंडूकभटिककरिकाबभ्रुनकुलादीनां वधे शूद्रवत् " । अत्र मण्डूकादिषु बुद्धिपूर्वकता बोद्धव्या । भटिका छुच्छुंदरिः । करिका अल्पमूषिका । बभ्रुरतिलोमशो गिरिभवप्राणिविशेषः । यच्च गौतमेन–( २३।१८-१९ ) " वैश्यवन्मंडूकनकलादिषु " इत्युक्तं तत्समुदितविषयम् ॥ २६९ ॥

[ २७१ श्लो. ] गज इत्यादि । गजवधे नीलवृषाः पञ्च देयाः । वृषोत्सर्गसम्बन्धिवृषलक्षणलक्षितो नीलवृष इति केचित् । वृषो देय एकहायनः । " अजमेषमनड्वाहं खरं हत्वैकहायनम् " इति ( ११।१३६ ) मनुवचनात् । क्रौंचः पक्षिविशेषः ॥ २७१ ॥

[ २७२ श्लो. ] हंसेत्यादि । श्येनः संचान इति प्रसिद्धः । क्रव्यादाः सिंहव्याघ्रादयः । जलशब्देन जलचरा बकादयो गृह्यन्ते । शिखंडी मयूरः । भासो गृध्रो गोष्ठकुक्कुटो वा । अक्रव्यादा हरिणादयः ॥ २७२ ॥

[ २७३ श्लो. ] उरगेष्वित्यादि । पण्डके नपुंसके मनुष्यजातीये । त्रपु रंगम् । कोले शूकरे । गुंजापरिमितं सुवर्णम् ॥ २७३ ॥

[ २७४ श्लो. ] तित्तिरावित्यादि । द्रोणश्चतुराढकः । गजादीनामुक्तानां वधे निर्द्धनत्वेन दातुमशक्त एकैकस्य शुद्धयर्थं सांतपनादिकृच्छ्रमनुबन्धाद्यपेक्षया जाबालाद्युक्तमनुसन्धेयम् । यथा जाबालः—

"व्यापादनाऽपहारेषु सन्तोष्य स्वामिनस्तथा । पापं निवेद्य विप्रेभ्यः प्रायश्चित्तेन शुध्यति ॥

"हस्तिनं तुरगं हत्वा हिरण्यं गां तथैव च । महासांतपनं कुर्याद्गोभूकन्याऽनृतेषु च" ॥ २७४ ॥

[ २७५ श्लो. ] किंचित्सास्थिवधे देयं प्राणायामस्त्वनस्थिकेत्यादि । अस्थिमतां ज्यैष्ठिकादीनामेकैकवधो किंचित् पणैकम् । अनस्थिके मशकादौ प्राणायामः कार्यः ।

उपभोग्यफलानां वृक्षाणामाम्रादीनां गुल्मादीनां च पुष्पितानां तत्सवितुरित्यादि ऋचः शतं जपेत् । तथा च मनुः ( ११।१४२ )—

" फलदानां च वृक्षाणां छेदने जप्यमृक्शतम् । गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम्" ॥२७५॥

---

१ ब–गुणविशेषे त्वंगिराः । २ अब–धः । ३ ब– + दानशक्तौ ।

[ २७७ श्लो. ] **पुंश्चली**त्यादि । पुंश्चल्यादिभिर्नाभेरधः पादादिदेशे दशनक्षतः **प्राणायामं जले कृत्वा घृतं प्राश्य** परेऽह्नि शुध्यति । विशेषमाहाङ्गिराः—

"ब्रह्मचारी शुना दष्टस्त्र्यहः सायं पयः पिबेत् । गृहस्थो वै त्रिरात्रं तु एकाहं योऽग्निहोत्रवान् ॥

"नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत्" ॥ २७७ ॥

[ २७५ श्लो. ] **फले**त्यादि । बदरिकादिफलमधूकादिपुष्पतण्डुलगुडादिरसजातानां कीटानां वधे घृतमात्राशनो दिनमेकं भवेत् । **ओषधीनां** कृष्टाऽकृष्टभूजातानां प्रयोजनं **विना छेदे** क्षीराशी दिनमेकं गोऽनुगो भवेत् । अत्र स्मृत्यन्तरोक्तप्रायश्चित्तविशेषो गुणोत्कर्षापकर्षकामाकामापेक्षया व्यवस्थेयः ॥ २७५ ॥

[ २७८ श्लो. ] **यन्म** इत्यादि । 'यन्मेऽद्य रेतः पृथिवीम्' इति 'पुनर्मामैत्विन्द्रियम्' इति च एताभ्यां स्त्रीसंभोगव्यतिरेकेण स्खलितं रेतोऽभिमन्त्र्य तेन रेतसा हृदयस्य भ्रुवोरप्यन्तरमनामिकया स्पृशेत् । ऊर्ध्वरेतसां ब्रह्मचारीयत्यादीनां पुनराह "प्राणायामविशुद्धात्मा जायते विरजाः पुनः" ॥ २७८ ॥

[२७९ श्लो.] **मयी**त्यादि । प्रतिबिंबरूपां मुखादेश्छायामप्सु दृष्ट्वा 'मयि तेज इन्द्रियं' इत्यादिकं जपेत् । **अशुचौ सुरादौ दृष्टे** वाक्पाणिपादादिचापलेऽनृतवदने सावित्रीं जपेत् । अकामतोऽ**नृताभिधाने** त्वाचमनमात्रम् । "निष्ठीव्योक्त्वानृतानि च आचामेत् प्रयतोऽपि सन्" (५।१४५) इति **मनु**वचनात् । अल्पानृते दक्षिणश्रवणस्पर्शमात्रम् । 'अनृते दक्षिणं श्रवणं स्पृशेत्' इति **मनु**वचनात् ॥ २७९ ॥

[ २८० श्लो. ] अवेत्यादि । **ब्रह्मचारी योषितं गत्वाऽवकीर्णी भवेत् । गर्दभपशुं** निर्ऋतिदैवत्य**मालभ्य** गृह्योक्तविधिना हुत्वा **विशुध्यति** । विशेषमाह **मनुः** ( ११।११८ )—

"अविकीर्णी तु काणेन गर्दभेन चतुष्पथे । पाकयज्ञविधानेन यजेत निर्ऋतिं निशि" ॥

यदा तु स गुरुदारेष्ववकीर्णस्तदा गुरुदारगमनप्रायश्चित्तमेव कुर्यात् गुरुत्वात् ॥ २८० ॥

[ २८१ श्लो. ] **भैक्षे**त्यादि । **अनातुरो** ब्रह्मचारी **सप्तरात्रं भैक्ष्याग्निकार्ये त्यक्त्वा** 'कामावकीर्णोऽस्मि कामकामाय स्वाहा' 'कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि कामकामाय स्वाहा' **इत्येताभ्यां मन्त्राभ्यामाज्याहुतिद्वयं** हुत्वा वक्ष्यमाणश्लोकोक्तमंत्रेणोपस्थानं कुर्यात् ॥२८१॥

[ २८२ श्लो. ] **उपे**त्यादि । 'सं मा सिञ्चन्तु' इत्यादि **बौधायनोक्तेन** प्रयताञ्जलिः किंचित्तिरश्चीनोऽग्निमुपतिष्ठेत् । **बौधायनः** ( ४।२।११ )—

"सं[3] मा सिञ्चन्तु मरुतः सं मित्रः सं बृहस्पतिः । सं[3] माऽयमग्निः सिंचत्वायुषा च बलेन च" ॥ इति ।

ब्रह्मचारिणा कदाचित् मधुमांसभोजने कृते प्राजापत्यं कार्यम् । आरब्धव्रतशेषश्च समापनीयः । अस्यापवादमाह (**वसिष्ठः**—२३।११)—"स चेद्व्याधीयीत कामं गुरोरुच्छिष्टं भैषज्यार्थं सर्वं प्राश्नीयात् । येनेच्छेत्तेन चिकित्सेत् । स यदाऽगदो भवति तदोत्थायाऽऽदित्यमुपतिष्ठेत् । हंसः शुचिषदित्येतया" ॥ २८२ ॥

[ २८३ श्लो. ] **कृच्छ्रेत्यादि** । गुरुप्रयुक्तो ब्रह्मचारी यदि विषमदेशादौ गतो म्रियते तदा

१ ब–भिद्रुग्धो । २ गौतम २५।४ । ३ ब–समां– ।

